## जगन्नाथ वैदिक पूजा पद्धति

**पुरुष सूक्त और उत्तर नारायण सूक्त**

वाजसनेयि माध्यन्दिनशाखीय यजुर्वेद, अध्याय ३१-

स॒हस्र॑शीर्षा॒ पुरु॑षः सहस्रा॒क्षः स॒हस्र॑पात्। स भूमि॑ꣳ स॒र्वत॑ स्पृ॒त्वाऽत्य॑तिष्ठद्दशाङ्गु॒लम्॥१॥

पुरु॑ष ए॒वेदꣳ सर्वं॒ यद्भू॒तꣳ यच्च॑ भा॒व्य॒म्। उ॒तामृ॑त॒त्वस्येशा॑नो॒ यदन्ने॑नाति॒रोह॑ति॥२॥

ए॒तावा॑नस्य महि॒मातो॒ ज्याया॑ꣳश्च॒ पूरु॑षः। पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृत॑न्दि॒वि॥३॥

त्रि॒पादू॒र्ध्वऽ उदै॒त्पुरु॑षः॒ पादो॑ऽस्ये॒हाभ॑व॒त्पुनः॑। ततो॒ विष्व॒ङ्व्य॒क्रामत् साशनानश॒ने ऽअ॒भि॥४॥

ततो॒ वि॒राड॑जायत वि॒राजो॒ ऽअधि॒पूरु॑षः। स जा॒तो ऽअत्य॑रिच्यत प॒श्चाद् भूमि॒मथो॑ पु॒रः॥५॥

तस्मा॑द्य॒ज्ञात् स॑र्वहु॒तः सम्भृ॑तम्पृषदा॒ज्यम्। प॒शूꣳस्ताꣳश्च॑क्रे वाय॒व्या॒नार॒ण्या ग्रा॒म्याश्च॒ ये॥६॥

तस्मा॑द्य॒ज्ञात्स॑र्व॒हुत॒ऽऋचः॒ सामा॑नि जज्ञिरे। छन्दा॑ꣳसि जज्ञिरे॒ तस्मा॒द्यजु॒स्तस्मा॑दजायत॥७॥

तस्मा॒दश्वा॑ऽअजायन्त॒ ये के चो॑भ॒याद॑तः। गावो॑ ह जज्ञिरे॒ तस्मा॒त्तस्मा॑ज्जा॒ताऽअ॑जा॒वयः॑॥८॥

तꣳ य॒ज्ञम्ब॒र्हिषि॒ प्रौक्ष॒न्पुरु॑षञ्जा॒तम॑ग्रतः। तेन॑ दे॒वा ऽअ॑यजन्त सा॒ध्याऽऋष॑यश्च॒ ये॥९॥

यत्पुरु॑षꣳव्यद॑धुः कति॒धा व्य॑कल्पयन्। मुख॒ङ्किम॑स्यासीत्किम्बा॒हू किमू॒रू पादा॑ऽउच्येते॥१०॥

ब्रा॒ह्म॒णो॑ऽस्य॒ मुख॑मासीद्बा॒हू रा॑ज॒न्यः॒ कृ॒तः। ऊ॒रू तद॑स्य॒ यद्वैश्यः॑ प॒द्भ्याꣳ शू॒द्रोऽअ॑जायत॥११॥

च॒न्द्रमा॒ मन॑सो जा॒तश्चक्षोः॒ सूर्यो॑ऽअजायत। श्रोत्रा॑द्वा॒युश्च॑ प्रा॒णश्च॒ मुखा॑द॒ग्निर॑जायत॥१२॥

नाभ्या॑ऽआसीद॒न्तरि॑क्षꣳ शी॒र्ष्णो द्यौः सम॑वर्तत। प॒द्भ्याम्भूमि॒र्दिशः॒ श्रोत्रा॒त्तथा॑ लो॒काꣳऽअ॑कल्पयन्॥१३॥

यत्पुरु॑षेण ह॒विषा॑ दे॒वा य॒ज्ञमत॑न्वत। व॒स॒न्तो॒ऽस्यासी॒दाज्य॑ङ्ग्री॒ष्मऽइ॒ध्म श॒रद्ध॒विः॥१४॥

स॒प्तास्या॑सन्परि॒धय॒स्त्रिः स॒प्त स॒मिधः॑ कृ॒ताः। दे॒वा यद्य॒ज्ञन्त॑न्वा॒नाऽअब॑ध्न॒न्पुरु॑षम्प॒शुम्॥१५॥

य॒ज्ञेन॑ य॒ज्ञम॑यजन्त दे॒वास्तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन्। ते ह॒ नाक॑म्महि॒मानः॑ सचन्त॒ यत्र॒ पूर्वे॑ सा॒ध्याः सन्ति॑ दे॒वाः॥१६॥

उत्तर नारायण सूक्त

अ॒द्भ्यः सम्भृ॑तः पृथि॒व्यै रसा॑च्च वि॒श्वक॑र्मणः॒ सम॑वर्त॒ताग्रे॑। तस्य॒ त्वष्टा॑ वि॒दध॑द्रू॒पमे॑ति॒ तन्मर्त्य॑स्य दे॒व॒त्वमा॒जान॒मग्रे॑॥१७॥

वेदा॒हमे॒तम्पुरु॑षम्म॒हान्त॑मादि॒त्यव॑र्ण॒न्तम॑सः प॒रस्ता॑त्।

तमे॒व वि॑दि॒त्वाति॑ मृ॒त्युमे॑ति॒ नान्यः पन्था॑ विद्य॒तेय॑नाय॥१८॥

प्र॒जाप॑तिश्चरति॒ गर्भे॑ऽअ॒न्तरजा॑यमानो बहु॒धा विजा॑यते।

तस्य॒ योनि॒म्परि॑पश्यन्ति॒ धीरा॒स्तस्मि॑न्ह तस्थु॒र्भुव॑नानि॒ विश्वा॑॥१९॥

यो दे॒वेभ्य॑ऽआ॒तप॑ति॒ यो दे॒वाना॑म्पु॒रोहि॑तः। पूर्वो॒ यो दे॒वेभ्यो॑ जा॒तो नमो॑ रु॒चाय॒ ब्राह्म॑ये॥२०॥

रु॒चम्ब्रा॒ह्मञ्ज॒नय॑न्तो दे॒वाऽअग्रे॒ तद॑ब्रुवन्। यस्त्वै॒वम्ब्रा॑ह्म॒णो वि॒द्यात्तस्य॑ दे॒वाऽअ॑स॒न्वशे॑॥२१॥

श्रीश्च॑ ते ल॒क्ष्मीश्च॒ पत्न्या॑वहोरा॒त्रे पा॒र्श्वे नक्ष॑त्राणि रू॒पम॒श्विनौ॒ व्यात्त॑म्।

इ॒ष्णन्नि॑षाणा॒मुम्म॑ऽइषाण सर्वलो॒कम्म॑ऽइषाण॥२२॥

**अथ पुरुष सूक्त विधिः**

### अथ विनियोगः

ॐ अस्य सहस्रशीर्षेति षोडशर्चस्य पुरुषसूक्त महामन्त्रस्य नारायण ऋषिः। अनुष्टुप् छन्दः। अन्त्याया त्रिष्टुप् छन्दः। जगद्बीजं पुरुषो देवता। पुरुष एवेदं - इति बीजम्। यज्ञेन यज्ञम्- इति शक्तिः। एतावान्-इति कीलकम्। मम सकलाभीष्ट सिद्ध्यर्थे धन-धान्य -पुत्रादि सकल सम्पत् समृद्ध्यर्थे श्रीमन्नारायण प्रीति द्वारा सर्वविध पुरुषार्थ सम्पत्तये न्यास- पूजा- पाठ- हवनाभिषेकेषु विनियोगः। इति॥

### अथ ऋष्यादि न्यासः

ॐ श्रीमन्नारायणर्षये नमः शिरसि। ॐ जगत्कारण पुरुष देवतायै नमो हृदये। ॐ अनुष्टुप् -त्रिष्टुप्-छन्दोभ्यां नमो मुखे। ॐ पुरुष एवेदं -इति बीजाय नमो नाभौ। ॐ यज्ञेन यज्ञम्-इति शक्तये नमः कट्याम्। ॐ एतावान् -इति कीलकाय नमः पादौ। मम सकलाभीष्टं सिद्ध्यर्थे धन -धान्य- पुत्रादि सकल सम्पत् समृद्ध्यर्थे श्रीमन्नारायण प्रीति द्वारा सर्वविध पुरुषार्थ सम्पत्तये पुरुष सूक्त -न्यास -पूजा- पाठ - हवनाभिषेकेषु विनियोगाय नमः सर्वाङ्गेषु। इति॥

**अथ ऋचाद्यङ्ग न्यासः**

ॐ सहस्रशीर्षा - इति वाम करे १। ॐ पुरुष एवेदं- इति दक्षिण करे २। ॐ एतावानस्य - इति वाम पादे ३। ॐ त्रिपादूर्ध्व - इति दक्षिण पादे ४। ॐ ततो विराड- इति वाम जानौ ५। ॐ तस्माद्यज्ञात् - इति दक्षिण जानौ ६। ॐ तस्माद्यज्ञात्सर्वहुत ऋचः- इति वाम कट्याम् ७। ॐ तस्मादश्वा - इति दक्षिण कट्याम् ८। ॐ तं यज्ञम् - इति नाभौ ९। ॐ यत्पुरुषं - इति हृदये १०। ॐ ब्राह्मणोऽस्य - इति कण्ठे११। ॐ चन्द्रमा मनसो - इति वाम बाहौ १२। ॐ नाभ्या आसी - इति दक्षिण बाहौ १३। ॐ यत्पुरुषेण - इति मुखे १४। ॐ सप्तास्यासन्-इति नेत्रयोः १५। ॐ यज्ञेन यज्ञं -इति मूर्ध्नि १६। इति॥

**अथ करन्यासः**

ॐ ब्राह्मणोऽस्य -इत्यङ्गुष्ठाभ्यां नमः। ॐ चन्द्रमा - इति तर्जनीभ्यां नमः। ॐ नाभ्या-इति मध्यमाभ्यां नमः। ॐ यत्पुरुषेण - इत्यनामिकाभ्यां नमः। ॐ सप्तास्यासन् - इति कनिष्ठिकाभ्यां नमः। ॐ यज्ञेन -इति करतल करपृष्ठाभ्यां नमः। इति॥

**अथ हृदयादि न्यासः**

ॐ ब्राह्मणोऽस्य-इति हृदयाय नमः। ॐ चन्द्रमा-इति शिरसे स्वाहा। ॐ नाभ्या-इति शिखायै वषट्। ॐ यत्पुरुषेण-इति कवचाय हुम्। ॐ सप्तास्यासन्-इति नेत्राभ्यां वौषट्। ॐ यज्ञेन यज्ञं -इति अस्त्राय फट्। ॐ भूर्भुवः स्वरोमिति दिग्बन्धः। इति॥

**अथ नारायण ध्यानम्**

**ध्येयः सदा सवितृ मण्डल मध्यवर्ती, नारायण सरसिजासन सन्निविष्टः।**
**केयूरवान् मकर कुण्डलवान् किरीटी, हारी हिरण्मय वपुर्धृत शङ्ख-चक्रः॥१॥**

**अथ छन्दो लक्षणम्**

मृत्युभीतैः पुरा देवैरात्मनश्छादनाय च। छन्दांसि संस्मृतानीह छादितास्तैस्ततोऽमराः॥
छादनाश्छन्द उद्दिष्टं वाससी कृत्तिरेव च। छन्दोभिरावृतं सर्वं विद्यात्सर्वत्र नान्यतः॥
(बृहत् पराशर स्मृति, २/३९-४०)

अथ देवता लक्षणम्

यस्मिन् मन्त्रे तु यो देवस्तेन देवेन चिह्नितम्। मन्त्रं तद्दैवतं विद्यात् सन्ति तत्र तु देवताः॥४१॥

अथ ऋषि लक्षणम्

येन यद् ऋषिणा दृष्टं सिद्धिः प्राप्ता तु येन वै। मन्त्रेण तस्य सः प्रोक्तो मुनि भावस्तदात्मकः॥४२॥

अथ विनियोग लक्षणम्

यत्र कर्माणि चारब्धे जप-होमार्चनादिके। क्रियन्ते येन मन्त्रेण विनियोगस्तु सः स्मृतः॥४३॥

अथ ब्राह्मण लक्षणम्

अस्य मन्त्रस्य चार्थोऽयमयं मन्त्रोऽत्र वर्तते। तत्तस्य ब्राह्मणं ज्ञेयं मन्त्रस्येति श्रुति क्रमः॥४४॥
एतद्धि पञ्चकं ज्ञात्वा क्रियते कर्म यद् द्विजः। तदनन्त फलं तेषां भवेद्वेद निदर्शनात्॥४५॥
छन्दो दैवतमार्षं च विनियोगं च ब्राह्मणम्। मन्त्रं पञ्चविधं ज्ञात्वा द्विजः कर्म समारभेत्॥२९४॥
दद्यात् पुरुष सूक्तेन आपः पुष्पाणि चैव हि। अर्चितं् स्यादिदं तेन विश्वं भुवन सप्तकम्॥३८०॥
अनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता। पुरुषो यो जगद्-बीजं ऋषि-र्नारायणः स्मृतः॥३८१॥

एतान्यविदित्वा योऽधीते ऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामः भवत्यथातराश्व गर्तं वा पद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयाम्भवत्यथ विज्ञायैतानि योऽधीते तस्य वीर्यवदथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते। (सर्वानुक्रमणिका, १/१)

**अथ न्यास प्रमाणम्**

प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे। तृतीयां वाम पादे च चतुर्थी दक्षिणे न्यसेत्॥३८४॥
पञ्चमी वाम जानौ तु षष्ठी वै दक्षिणे न्यसेत्। सप्तमीं वाम कट्यां तु दक्षिणस्यां तथाष्टमीम्॥३८५॥
नवमीं नाभि मध्ये तु दशमीं हृदये तथा। एकादशीं वाम कुक्षौ द्वादशी दक्षिणे न्यसेत्॥३८६॥
कण्ठे त्रयोदशीं न्यस्य तथा वक्त्रे चतुर्दशीम्। अक्ष्णोः पञ्चदशीं चैव विन्यसेन्-मूर्ध्नि षोडशीम्॥३८७॥
एवं न्यास विधिं कृत्वा पश्चात् पूजां समारभेत्॥३८८॥
(बृहत् पाराशर स्मृति, अध्याय २) वृद्ध हारीत स्मृति, अध्याय ८ अपि।

**अथ नारायण पूजा क्रमः**

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं सर्वत स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥१॥
श्रीमते नारायणाय नमः आवाहनं समर्पयामि॥१॥
पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥२॥
श्रीमते नारायणाय नमः, आसनं समर्पयामि॥२॥
एतावानस्य महिमातो ज्यायाँश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥३॥
श्रीमते नारायणाय नमः, पाद्यं समर्पयामि॥३॥
त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः। ततो विश्वङ् व्यक्रामत् साशनानशने अभि॥४॥
श्रीमते नारायणाय नमः, अर्घ्यं समर्पयामि॥४॥
ततो विराडजायत विराजो अधिपूरुषः। स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः॥५॥
श्रीमते नारायणाय नमः आचमनीयं समर्पयामि॥५॥
तस्माद्यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्। पशूँताँश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये॥६॥
श्रीमते नारायणाय नमः स्नानं समर्पयामि॥६॥
तस्माद्यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे।छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥७॥
श्रीमते नारायणाय नमः वस्त्रं समर्पयामि॥७॥
तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥८॥
श्रीमते नारायणाय नमः यज्ञोपवीतं समर्पयामि॥८॥
तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये॥९॥
श्रीमते नारायणाय नमः गन्धं समर्पयामि॥९॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमास्यासीत् किं बाहू किमूरू पादा उच्येते॥१०॥
श्रीमते नारायणाय नमः पुष्पं समर्पयामि॥१०॥
ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥११॥
श्रीमते नारायणाय नमः धूपमाघ्रापयामि॥११॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥१२॥
श्रीमते नारायणाय नमः दीपं दर्शयामि॥१२॥
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयन्॥१३॥

श्रीमते नारायणाय नमः नैवेद्यं निवेदयामि॥१३॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥१४॥
श्रीमते नारायणाय नमः नमस्कारं समर्पयामि॥१४॥
सप्तास्यासन् परिधयस्त्रिः सप्तसमिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्।\१५॥
श्रीमते नारायणाय नमः प्रदक्षिणां समर्पयामि॥१५॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥१६॥
श्रीमते नारायणाय नमः सपुष्पाञ्जलिं विसर्जनं समर्पयामि॥१६॥ ----।इति।

**अथ नारायण पूजा प्रमाणम्**

आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम्। द्वितीययासनं दद्यात् पाद्यं चैव तृतीयया॥३९४॥
अर्घ्यश्चतुर्थ्यां दातव्यः पञ्चम्याचमनं तथा। षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्र धौतकम्॥३९५॥
यज्ञोपवीतं चाष्टम्या नवम्या गन्धमेव च। पुष्प देयं दशम्या तु एकादश्या च धूपकम्॥३९६॥
द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेदनम्। चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणाः॥३९७॥
षोडश्योद्वासनं कुर्याद् देव-देवस्य चक्रिणः। स्नानं वस्त्रं च नैवेद्ये दद्याचमनं हरेः॥३९८॥
(बृहत् पाराशर स्मृति, अध्याय, २) --- ।इति।

**अथ षोडशोपचाराः**

आवाहनासने पाद्यमर्घ्यमाचमनीयकम्। स्नानं वस्त्रोपवीते च गन्ध माल्यादिभिः क्रमात्॥१॥
धूपं दीपं च नैवेद्यं नमस्कारं प्रदक्षिणाम्॥२॥ (पाञ्चरात्र)
अथ पञ्चोपचाराः
ध्यानमावाहनं चैव भक्त्या यच्च निवेदनम्। नीराजनं प्रणामश्च पञ्च पूजोपचारकाः॥ (जाबालि, १)
गन्ध पुष्पे धूप दीपो नैवेद्यः पञ्चते क्रमात्। (पाञ्चरात्र)

**अथ दशोपचाराः**

अर्घ्यं पाद्यञ्चाचमनं स्नानं वस्त्र निवेदनम्। गन्धादयो नैवेद्यान्ता उपचारा दश क्रमात्॥ (ज्ञानमाला)

**अथाष्टत्रिंशदुपचाराः**

अर्घ्यं पाद्यमाचमनं मधुपर्कमुपस्पृशम्। स्नानं नीराजनम् भूषा दर्पणालोकनं ततः॥
गन्ध पुष्पे धूप दीपौ नैवेद्यं च ततः क्रमात्। पानीयं तोयमाचामं हस्त वासस्ततः परम्॥
ताम्बूलमनुलेपं च पुष्पदानं ततः पुनः। गीतं वाद्यं तथा नृत्यं स्तुतिं चैव प्रदक्षिणाः॥
पुष्पाञ्जलि नमस्कारावष्टत्रिंशत्समीरिताः। (ज्ञानमाला)

**अथ राजोपचाराः**

ततः पञ्चामृताभ्यङ्गमङ्गस्योद्वर्तनं तथा। मधुपर्क परिमल द्रव्याणि विविधानि च।
पादुकां दोलनादर्शं व्यञ्जनं छत्र चामरे। वाद्यार्तिक्यं नृत्यगीत शय्या राजोपचारकाः॥ (संस्कार भास्कर)

**अथ कलशादि पूजा**

सुवासित जलैः पूर्ण सव्ये कुम्भं सुपूजयेत्। मम नामाङ्कितां घण्टां सुदर्शन युतां यदि॥
ममाग्रे स्थापयेद्यस्तु तस्य देहे वसाम्यहम्। घण्टां सम्पूज्य मध्ये त्वागमार्थमिति वादयेत्॥
निवेशयेत् पुरो भागे गन्धं पुष्पं च भूषणम्। दीपं दक्षिणतो दद्यात् पुरो नैव तु वामतः।
वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे। (पूजा सागर)

धूपे नीराजने स्नाने पूजाकाले विलेपने। ममाग्रे वादयन् घण्टामुत्तमं लभते फलम्॥
(स्कन्द पुराण, २ वैष्णव खण्ड, २/५/६/२०)
स्नाने धूपे तथा दीपे नैवेद्ये भूषणे तथा। घण्टा नादं प्रकुर्वीत तथा नीराजने ऽपि च॥ (कालिका पुराण)
कुर्यादावाहनम् मूर्त्तौ मृन्मयां सर्वदैव हि। प्रतिमायां जले वह्नौ नावाहन विसर्जने॥ (वाचस्पति)
आसने पञ्च पुष्पाणि स्वागते षट् शुभानि च। (नारद पाञ्चरात्र, ४/९/३)
पूरयित्वा शुभ जलं पात्रेषु कुसुमैर्युतम्। द्रव्याणि निक्षिपेत्तेषु मङ्गलानि यथा क्रमात्॥७२॥
उशीरं चन्दनं काष्ठं पाद्य पात्रे विनिक्षिपेत्। विष्णु-क्रान्तं च दूर्वां च कौशेयांस्तिलसर्षपान्॥७३॥
अक्षतांश्च फलं पुष्पमर्घ्य पात्रे विनिक्षिपेत्। जातीफलं च कर्पूर मेलां चाचमनीयके॥७४॥
मकरन्दं प्रवालं च रत्नं सौवर्णमेव च। तानि दद्यात् स्नानपात्रे धात्री सुरतरुं तथा॥७५॥
द्रव्याणामप्यलाभे तु तुलसी पत्रमेव च। चन्दनं वा सुवर्णं वा कौशेयं वा विनिक्षिपेत्॥७६॥
सौवर्णानि च रौप्याणि ताम्रकांस्यं प्रयोजयेत्। पात्राणि चोद्धरण्या च दद्यात् पाद्यादिकं तथा॥७७॥
(वृद्ध हारीत स्मृति, अध्याय, ७)
गव्यमाज्यं दधिक्षीरं माक्षिकं शर्करान्वितम्। एकत्र मिलितं ज्ञेयं दिव्यं पञ्चामृतं परम्॥ (धन्वन्तरि)
रजनी सहदेवी च शिरीषं लक्श्मनापि च। सहभद्रा कुशाग्राणि उद्वर्तनमिहोच्यते॥ (आह्निक सूत्र)
हरिद्रा कुङ्कुमं चैव सिन्दूरादि समन्वितम्। कज्जलं कण्ठ सूत्रादि सौभाग्य द्रव्यमुच्यते॥
आस्नात्वा तुलसीं छित्वा यः पूजां कुरुते जनः। सोऽपराधी भवेत्सत्यं तत्सर्वं निष्फलं भवेत्॥ (वायु पुराण)
देवार्थे तुलसीच्छेदो होमार्थे समिधां तथा। इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च॥ (पद्म पुराण)
पङ्कजं पञ्चरात्रं स्याद्दशरात्रं च बिल्वकम्। एकादशाहं तुलसी नैव पर्युषिता भवेत्॥
जाती शमी कुशाः कङ्कु मल्लिका करवीरजम्। नाग पुन्नागकाशोक रक्त नीलोत्पलानि च॥
चम्पकं बकुलं चैव पद्मं बिल्वं पवित्रकम्। एतानि सर्व देवानां संग्राह्याणि समानि च॥
हिरुका कङ्कणं दारु मल्लिकागुरु वासिता। शङ्ख जातीफलं श्रीमत् प्रिया धूपा हरेरिमे॥ (वामन पुराण)
न मिश्रीकृत्य दद्यात्तु दीपं स्नेहे घृतादिकम्। घृतेन दीपकं नित्यं तिल तैलेन वा पुनः॥ (कालिका पुराण)
ज्वालयेन् मुनिशार्दूल सन्निधौ जगदीशितुः। कार्पास वर्तिका ग्राह्या न दीर्घा न च सूक्ष्मका॥
एकां विनायके कुर्याद् द्वे सूर्ये तिस्र ईश्वरे। चतस्रः केशवे कुर्यात् सप्ताश्वत्थे प्रदक्षिणाः। (बह्वृच परिशिष्ट)

**अथ मन्त्र पुष्पाञ्जलिः**

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्॥१॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत् परमं पदं पर्याप्तानन्तरायाय॥२॥
सर्वस्तोमो ऽतिरात्रमुत्तमं महर्भवति। सर्वस्यापत्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति॥३॥
राजाधिराजाय प्रसह्यसाहिने, नमो वयं वैश्रवणाय कुर्महे।
स मे कामान्कामकामाय मह्यम्, कामेश्वरो वैश्रवणो ददातु॥
कुबेराय वैश्रवणाय महाराजाय नमः॥४॥
ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं।
पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं, समन्त पर्यायी स्यात् सार्वभौमः सर्वायुषः।
आन्तादापरार्धात् पृथिव्यै समुद्र पर्यन्तायाः, एकराडिति तदप्येषः श्लोकोऽभिगीतः॥५॥
मरुतः परिवेष्टारो मरुत्तस्या वसन् गृहे। आविक्षितस्य कामप्रे विश्वेदेवाः सभासदः॥६॥
विश्वतश्चक्षुरुत विश्वतो मुखो, विश्वतो बाहुरुत विश्वतस्पात्।

सं बाहुभ्यां धमति सम्पतत्रैःद्यावा-भूमी जनयन् देव एकः॥७॥

ॐ नारायणाय विद्महे, वासुदेवाय धीमहि, तन्नो विष्णुः प्रचोदयात्॥८॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥९॥

**अथ चक्राब्ज मण्डल रचना प्रकारः**

चन्दनार्द्राणि सत्राणि पश्चिमतः प्राचीनं दक्षिणत उदीचीनं सप्तदश वारं पातयेत्। तेन षट् पञ्चाशदधिक द्विशत सङ्ख्यकानि कोष्ठकानि सम्पद्यन्ते। तेषु मध्ये षट् त्रिंशत् कोष्ठानि मार्जयित्वा मध्ये शङ्कुं स्थापयित्वा सूत्र मार्गेण वृत्तानि समानि पञ्च बिम्बानि यथा सम्पद्येरंस्तथा भ्रामयित्वा प्रथम वृत्तस्य मध्ये कर्णिका क्षेत्रं कल्पयेत्। तत्राष्टौ विन्दवः प्रकल्पनीयाः। द्वितीय बिम्बं त्रिधा प्रथमं केशरान् द्वितीये दलानि तृतीयं नाभिं प्रकल्प्य तत्र भाग-त्रयं कुर्यात्। तद् बर्हि बिम्ब-द्वये द्वादशाक्षराणि कल्पयित्वा पञ्चमे बिम्बे नेमिं कल्पयेत्। नेमेश्च भागद्वयं कुर्यात्। तद् बहिरष्टाविंशति कोष्ठे चतुरस्रं पीठं प्रकल्प्य तद् बहिरशीति कोष्ठे वीथीं च प्रकल्प्य तत्र लता प्रतानादिकं विरच्य तद् बहिः पङ्क्तिद्वयस्थ द्वादशाधिकैकशतसंख्यकेषु कोष्ठेषु प्रतिदिशं मध्ये कोष्ठ-चतुष्टयेन द्वार-चतुष्टयं प्रकल्प्य, तत् पार्श्वे बाह्य पङ्क्तिस्थ कोष्ठत्रयेण अन्तः पङ्क्तिस्थ कोष्ठेन च उपशोभाः प्रकल्प्य अवशिष्ट कोष्ठ द्वयेन शङ्खान् प्रकल्पयेत्।

**अथ चक्राब्ज मण्डले रक्तादिवर्ण पूरण विधिः**

पीतेन वर्णेन कर्णिकां शुक्लेन विन्दून् पाटलेन कर्णिका रेखां केशरावनिं द्विधा विभज्य पूर्व भागं द्विधा विभज्य पूर्व पीतैरुत्तरं रक्तैस्तदन्तर्भागेषु श्वेतैर्विन्दून् श्यामैः केशरान्तरालानि रक्तैर्दलरेखिका दलाग्राणि रक्तैर्दलमूलानि शुक्लैस्तदन्तरालानि श्यामैस्तदन्तर्वलयं रक्तैर्नाभिरेखां श्यामैररेखां कृष्णैरराणि रक्तैस्तदन्तरालानि श्यामैस्तदन्तर्वलयं कृष्णैः कल्पयेत्। नेमि भागं द्विधा विभज्य प्रथमं कृष्णेन द्वितीयं शुक्लेन पीठं पीतैर्वीथीं लता प्रतानादिकं हरितवर्णः शुक्लैः शोभा रक्तैरुपशोभाः पीतैरर्धशोभाः श्यामैः पूर्वादि द्वारचतुष्टयं क्रमेण शुक्ल रक्त पीत कृष्णैरुत्तरादि कोणानि अरुणेन तत्र शङ्खान् शुक्लेन वर्णेन प्रकल्प्य दलानि विन्दूंश्चाष्टौ प्रकल्पयेत्। केशराणि च तत्र। इतिपाद्म संहितायां।

१. नाभेर्बहिर्मण्डलयोर्द्वादशाराणि कल्पयेत्। (ईश्वर संहिता, ११/१६३)

२. केशरत्रितयं कुर्यात् पत्रे पत्रे ऽरुणप्रभम्। (१५६)

३. कृष्णानि सर्वशोभानि द्वारोद्देशस्थितानि च। तदर्धाकृतितुल्यानि। (१५६)

४. कोणानि केशराभानि सित शंखान्वितानि च। (१५०)

५. बहिरावरणं यद्वै सत्वाद्यं त्रितयं हि यत्। (१५३)

६. लता प्रतानं वीथ्यां वै कुर्याद्धारीत वर्णकम्।

७. श्वेत रक्तस्तु पाटलः। (अमरकोष, १/५/१४)




चक्राब्ज मण्डले वर्णाः-१ विन्दु-श्वेत, २ विन्दु पीत, ३ विन्दु-कृष्ण, ४ विन्दु-पाटल, ५ विन्दु-रक्त, ६ विन्दु-अरुण, ७. लता प्रतानादि-हरित वर्ण।



### अथ चक्राब्ज मण्डल देवताध्यानम्

रजांसि विद्धि भूतानि सित पीतादिकानि च। तन्मात्राण्युपशोभानि शोभानि करणानि च॥१॥
एवं सर्वाणि कोणानि सद्द्वाराणीन्द्रियाणि च। बहिरावरणं यद्वै सत्वाद्य त्रितयं हि यत्॥२॥
मनः सुवितता वीथिर्गर्वः पीठमुदाहृतम्। श्रीः पद्मं तदधिष्ठाता बीजात्मा चिन्मयः पुमान्॥३॥
अमूर्त ईश्वरश्चात्र तिष्ठत्यानन्द लक्षणः। यस्य सन्दर्शनादेव शश्वद् भावः प्रसीदति॥४॥
अङ्ग न्यासादिकं कुर्यात् सर्व कार्येषु सर्वदा। सर्वदा प्रणवं दद्यादादौ मन्त्रस्य पार्थिव॥५॥ (पाञ्चरात्र)

अथ दक्षिणे जानुनि दक्षिणोत्तरौ पाणी सव्यस्य पाणेरङ्गुष्ठ वर्जिताश्चतस्रोऽङ्गुलीः कृत्वा सव्याङ्गुष्ठं दक्षिणाङ्गुष्ठेन वेष्टयित्वा ताम्बूल पूगीफल हिरण्याक्षतोदकमादाय वेष्टयित्वा महा सङ्कल्पं कुर्यात्।

### अथ महासङ्कल्पः

ॐ तत्सदद्यास्य श्रीशेष शेषासन विष्वक्सेनादि नित्यसूरि निर्विशेषैरशेष सज्जन सम्भावनीयैरवम्भवदवद्य गन्धैरनादि माया

महावर्त बभ्रम्यमाण बाह्य कथकरं भावन गन्ध सिन्धुरैरधिजिगमिषित मुक्ति घण्टा पथैरखण्ड दिङ्मण्डल व्यापि यशो वितान वलित जगत् त्रितयैरौपनिषद् रहस्योपदेशिकैः श्रीमच्छठरिपुनाथ यामुन यतिवर सौम्यवर वादिभीकरादि दिव्य देशिकैः परम व्योम श्वेतद्वीप क्षीरसागर श्रीरङ्ग वृषगिरि सत्यव्रत यदुगिरि पुरुषोत्तम साकेत मथुरा सिद्धाश्रमादि दिव्याभिव्यक्ति प्रदेशेषु समनुष्ठित मङ्गलाशासन निखिल सुरासुर मुकुटमणि मञ्जरी निकर नीराजित पाद पीठस्य शरणागत परित्राण सप्त तन्तु दीक्षा-दीक्षितस्य सरसीरुह वासिनी सह चरित धर्मणः संसरण दव दहन ताप निर्वाण बलाहकस्य जगद्रक्षण शिक्षा विचक्षणस्य अच्युतानन्द वीर्यस्य महाजालक मध्य परिभ्राम्यमाणानेक कोटि सूर्य प्रभा समेतस्य श्रीभूमि नीला कुचकलश विन्यस्त कुङ्कुमाङ्कित वक्षस्थलस्य शेष पर्यङ्क शायिनः शङ्ख-चक्र-गदा खड्ग शार्ङ्ग पद्म हस्त विराजितस्य सौशील्य वात्सल्यादि गुण गणौघ महार्णवस्य श्रीमन् नारायणस्येच्छया नाभि कमलोद्भूत सकल लोक पितामहस्य ब्रह्मणः सृष्टिं कुर्वतस्तदुद्धरणाय प्रार्थितस्य महापुरुषस्य अचिन्त्या-परिमित शक्त्या महा जलौघ मध्ये परिभ्रम-माना-मनेक कोटि ब्रह्माण्डानामेकतमे ऽव्यक्त महदहङ्कार पृथिव्यप् तेजो वाय्वाकाशाद्यैरावृतेह्यस्मिन् महति ब्रह्माण्ड खण्डे श्रीमदादिवराह दंष्ट्राग्र विराजिते भू लोके जम्बू द्वीपे भारत खण्डे आर्यावर्त्तैक देशान्तर्गते (स्थन नामः) परार्ध द्वय जीविनो ब्रह्मणो द्वितीये परार्धे एक पञ्चाशत्तमे वर्षे श्वेतवाराह कल्पे वैवस्वत मन्वन्तरे अष्टाविंशति तमे कलि युगे कलि प्रथम चरणे बौद्धावतारे अमुक संख्यक विक्रम संवत्सरे अमुक नाम्नि संवत्सरे (अयन, ऋतु, मास, पक्ष, तिथि, वासर, नक्षत्र, गुरु राशि) शेषेसु ग्रहेषु यथास्थान स्थितेषु एवं गुण विशेषण विशिष्टायां शुभ पुण्य तिथौ (गोत्र नाम) सर्व पाप निरास पूर्वक-

महा पापोपपापानि नाना योनि कृतानि च। बाल भावेन यत् पापं क्षुतृडर्थे च यत् कृतम्॥१॥
आत्मार्थं चैव यत् पापं परार्थे चैव यत् कृतम्। तीर्थेषु चैव यत् पापं गुर्ववज्ञा कृतञ्च यत्॥२॥
राग द्वेषादि जनितं काम क्रोधेन यत् कृतम्। हिंसा निद्रादिजं पापं भेद दृष्ट्या च यत् कृतम्॥३॥
शुष्कमार्द्रञ्च यत् पापं जानताजानता कृतम्। देहाभिमानजं पापं सर्वदा सञ्चितं च यत्॥४॥
ब्रह्महा मद्यपः स्तेयी तथैव गुरु तल्पगः। महा पापानि चत्वारि तत् संसर्गी च पञ्चमः॥५॥
अति पातकमन्यच्च तन्न्यूनमुपपातकम्। गो वधो व्रात्यता स्तेयमृणानां चानपक्रिया॥६॥
अनाहिताग्निता पण्य विक्रयः परिवेदनम्। इन्धनार्थे द्रुमच्छेद स्त्री हिंसौषधि जीवनम्॥७॥
हिंसा यात्रा विधानञ्च भृतकाध्यापनं तथा। प्रथमाश्रममारभ्य यत्किञ्चित् किल्बिषं कृतम्॥८॥
कृमि कीटादि हननं यत्किञ्चित् प्राणि हिंसनम्। माता पित्रोरशुश्रूषा तद्वाक्याकरणं तथा॥९॥
अपूज्य पूजनं चैव पूज्यानाञ्च व्यतिक्रमः। अनाश्रमस्थताग्न्यादि देवाशुश्रूषणं तथा॥१०॥
पर कार्यापहरणं परद्रव्योपजीवनम्। ततोऽज्ञान कृतं पापं कायिकं वाचिकं तथा॥११॥
मानसं त्रिविधं वापि प्रायश्चित्तैरनाशितम्। तस्मादशेष पापेभ्यस्त्राहि त्रैलोक्यपावन॥१२॥
ऋद्धये पुष्टये चापि सिद्धये भक्तिलब्धये। शिवाय मुक्तये चैव वृद्धये सर्व कर्मणाम्॥१३॥
मन्त्राणां देशिकानाञ्च स्थानानामपि सर्वदा। पुत्र मित्र कलत्राणां दासी दाव गवामपि॥१४॥
वेद शास्त्रागमादीनां व्रतानामिष्ट सम्पदाम्। मनोरथानां सर्वेषां हितानां परिलब्धये॥१५॥
आयुरारोग्य मेधानां धनधान्यादि सम्पदाम्। पुण्यानामणिमादीनां गुणानां श्रेयसामपि॥१६॥
राज्ञो जनपदस्यापि यजमानस्य मन्त्रिणाम्। वैष्णवानां विशेषेण परत्र हितमिच्छताम्॥१७॥

सत्सन्तान प्राप्त्यर्थं ज्ञान भक्ति वैराग्यादि प्राप्त्यर्थं भगवद् भागवताचार्य कैङ्कर्या विच्छिन्न सन्तानेनाहरहर्वृद्ध्यर्थं राष्ट्रस्य दुर्भिक्षादि निवृत्ति पूर्वक तत्काल सम्भावित शस्य वृद्ध्यर्थमस्मिन् स्थाने सर्वेषां ब्राह्मण क्षत्रिय वैश्य शूद्राणां यथाभिलषित मनस्कामना सिद्ध्यर्थं श्रीमन्नारायणस्य अशेष चिदचिद्वस्तु शेषीभूतस्य सत्य ज्ञानानन्दामलत्व स्वरूपस्य श्री भूमि नीला नायकस्य ज्ञान शक्ति बलैश्वर्य वीर्य शक्तित्व परम कारुणिकत्व कृतज्ञत्व स्थिरत्वं परिपूर्णत्व पर मोदज्ञाक्षरत्वमार्दवार्जव सौगन्ध्य सौकुमार्यादि दिव्य गुण गण महार्णवस्य अभिनव जलधर सुन्दर दिव्य मङ्गल विग्रह विशिष्टस्य भगवतः पूजनं

करिष्ये।

## अथागमोक्त भगवदाराधन क्रमः।

### अथ ध्यानम्।

शान्ताकारं भुजग शयनं पद्मनाभं सुरेशं, विश्वाधारं गगन सदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं, वन्दे विष्णुं भव भय हरं सर्व लोकैकनाथम्॥१॥
ॐ आवाहये तं गरुडोपरि स्थितं, रमार्ध देहं सुर राज वन्दितम्।
कंसान्तकं चक्र गदाब्ज हस्तं, भजामि देवं वसुदेव सूनुम्॥२॥
श्रीमते नारायणाय नमः, आवाहनं समर्पयामि॥२॥
अस्यैः प्राणाः प्रतिष्ठन्तु अस्यैः प्राणाः क्षरन्तु च। अस्यै देवत्वमर्चायै मामहेति च कश्चन॥३॥
श्रीमते नारायणाय नमः, प्राणं प्रतिष्ठापययामि॥३॥
रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम्। आसनं च मया दत्तं गृहाण परमेश्वर॥४॥
श्रीमते नारायणाय नमः, आसनं समर्पयामि॥४॥
तापत्रय हरं दिव्यं परमानन्द सम्भवम्। तापत्रय विमोक्षाय तवार्घ्यं कल्पयाम्यहम्॥५॥
श्रीमते नारायणाय नमः, अर्घ्यं समर्पयामि॥५॥
यद् भक्तिलेश सम्पर्कात् परमानन्द सम्भवः। तस्मै ते परमेशाय पाद्यं शुद्धाय कल्पये॥६॥
श्रीमते नारायणाय नमः, पाद्यं समर्पयामि॥६॥
देवानामपि देवाय देवानां देवतात्मने। आचामं कल्पयामीश चात्मनां शुद्धि हेतवे॥७॥
श्रीमते नारायणाय नमः, आचमनीयं समर्पयामि॥७॥
सर्व कल्मष हीनाय परिपूर्ण मुखात्मने। मधुपर्कमिदं देवं कल्पयामि प्रसीद मे॥८॥
श्रीमते नारायणाय नमः, मधुपर्कं समर्पयामि॥८॥
उच्छिष्टो ऽप्यशुचिर्वापि यस्य स्मरण मात्रतः। शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकम्॥९॥
श्रीमते नारायणाय नमः, पुनराचमनीयं समर्पयामि॥९॥
परमानन्द बोधाय निमग्न निज मूर्तये। साङ्गोपाङ्गमिदं स्नानं कल्पयाम्यहमीश ते॥१०॥
श्रीमते नारायणाय नमः, स्नानं समर्पयामि॥१०॥
सर्वतीर्थ समायुक्तं सुगन्धिं निर्मलं जलम्। आचम्यतां मया दत्तं गृहीत्वा परमेश्वर॥११॥
श्रीमते नारायणाय नमः, स्नानान्ते पुनराचमनीयं समर्पयामि॥११॥
कामधेनु समुत्पन्नं सर्वेषां जीवनं परम्। पावनं यज्ञ हेतुश्च पयः स्नानार्थमर्पितम्॥१२॥
श्रीमते नारायणाय नमः, दुग्ध स्नानं समर्पयामि॥१२॥
पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम्। दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम्॥१३॥
श्रीमते नारायणाय नमः, दधि स्नानं समर्पयामि॥१३॥
नवनीत समुत्पन्नं सर्व सन्तोष कारकम्। घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम्॥१४॥
श्रीमते नारायणाय नमः, घृत स्नानं समर्पयामि॥१४॥
तरु पुष्प समुद्भूतं सुस्वादु मधुरं मधु। तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम्॥१५॥
श्रीमते नारायणाय नमः, मधु स्नानं समर्पयामि॥१५॥
इक्षुसार समुद्भूता शर्करा पुष्टि कारिका। मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम्॥१६॥
श्रीमते नारायणाय नमः, शर्करा स्नानं समर्पयामि॥१६॥

पयो दधि घृतं चैव मधुं च शर्करायुतम्। पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम्॥१७॥
श्रीमते नारायणाय नमः, पञ्चामृत स्नानं समर्पयामि॥१७॥
मन्दाकिन्यास्तु यद् वारि सर्वपापहरं शुभम्। तदिदं कल्पितं देव स्नानार्थं प्रतिगृह्यताम्॥१८॥
श्रीमते नारायणाय नमः, शुद्धोदक स्नानं समर्पयामि॥१८॥
मलयाचल सम्भूतं चन्दनागरु सम्भवम्। चन्दनं देव देवेश स्नानार्थं प्रतिगृह्यताम्॥१९॥
श्रीमते नारायणाय नमः, गन्धोदक स्नानं समर्पयामि॥१९॥
नाना सुगन्धि द्रव्यं च चन्दनं रजनी युतम्। उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम्॥२०॥
श्रीमते नारायणाय नमः, उद्वर्तन स्नानं समर्पयामि॥२०॥
मन्दाकिन्याः समानीतै र्हेमाम्भोरुह वासितैः। स्नानं कुरुष्व देवेश सलिलैश्च सुगन्धिभिः॥२१॥
श्रीमते नारायणाय नमः, गङ्गोदक स्नानं समर्पयामि॥२१॥
मायाचित्र पटाछन्न निज गुह्योरु तेजसे। निवारण विज्ञाय वासस्ते कल्पयाम्यहम्॥२२॥
श्रीमते नारायणाय नमः, वस्त्रं समर्पयामि॥२२॥
यमाश्रित्य महामाया जगत् सम्मोहिनी सदा। तस्मै ते परमेशाय कल्पयाम्युत्तरीयकम्॥२३॥
श्रीमते नारायणाय नमः, उत्तरीयं समर्पयामि॥२३॥
यस्य शक्ति त्रयेणेदं सम्प्रोतमखिलं जगत्। यज्ञसूत्राय तस्मै ते यज्ञसूत्रं प्रकल्पये॥२४॥
श्रीमते नारायणाय नमः, यज्ञसूत्रं समर्पयामि॥२४॥
स्वभाव सुन्दराङ्गाय नाना शक्त्याश्रयाय च। भूषणानि विचित्राणि कल्पयामि सुरार्चित॥२५॥
श्रीमते नारायणाय नमः, भूषणानि समर्पयामि॥२५॥
समस्त देव देवेश सर्व तृप्तिकरं परम्। अखण्डानन्द सम्पूर्णं गृहाण जलमुत्तमम्॥२६ ॥
श्रीमते नारायणाय नमः, जलं समर्पयामि॥२६॥
श्रीखण्ड चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्। विलेपनं सुरश्रेष्ठं चन्दनं प्रतिगृह्यताम्॥२७॥
श्रीमते नारायणाय नमः गन्ध विलेपनं समर्पयामि॥२७॥
परमानन्द सौभाग्य परिपूर्ण दिगन्तरम्। गृहाण परमं गन्धं कृपया परमेश्वर॥२८॥
श्रीमते नारायणाय नमः, गन्धं समर्पयामि॥२८॥
सुष्ठु चन्दन सम्मिश्रं पारिजात समुद्भवम्। मया दत्तं गृहाणाशु चन्दनं गन्ध संयुतम्॥२९॥
श्रीमते नारायणाय नमः, चन्दनं समर्पयामि॥२९॥
कुङ्कुमं कामना दिव्यं कामना काम सम्भवम्। कुङ्कुमेनार्चितो देव गृहाण परमेश्वर॥३०॥
श्रीमते नारायणाय नमः, कुङ्कुमं समर्पयामि॥३०॥
अबीरं च गुलालं च चोवा चन्दनमेव च। अबीरेणार्चितो देव अतः शान्तिं प्रयच्छ मे॥३१॥
श्रीमते नारायणाय नमः, अबीरं समर्पयामि॥३१॥
अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः। मया निवेदिता भक्त्या गृहाण परमेश्वर॥३२॥
श्रीमते नारायणाय नमः, अक्षतं समर्पयामि॥३२॥
तुरीय वन सम्भूतं नाना गुण मनोहरम्। सुमन्द सौरभं पुष्पं गृह्यतामिदमुत्तमम्॥३३॥
श्रीमते नारायणाय नमः, पुष्पं समर्पयामि॥३३॥
माल्यादीनि सुगन्धीनि मालेत्यादीनि वै प्रभो। मयानीतानि पुष्पाणि गृहाण परमेश्वर॥३४॥
श्रीमते नारायणाय नमः, पुष्पमालां समर्पयामि॥३४॥

तुलसी हेमरूपां च रत्न रूपां च मञ्जरीम्। भव मोक्ष प्रदां तुभ्यमर्पयामि हरिप्रियाम्॥३५॥
श्रीमते नारायणाय नमः, तुलसी पत्रं समर्पयामि॥३५॥
शमीं मे शमय मे पापं शमी लोहित कण्टका। धारिण्यर्जुन बाणानां रामस्य प्रियवादिनी॥३६॥
श्रीमते नारायणाय नमः, शमी पत्रं समर्पयामि॥३६॥
विष्ण्वादि सर्व देवानां दूर्वे त्वं प्रीतिदा सदा। क्षीर सागर सम्भूते वंश वृद्धिकरी भव॥३७॥
श्रीमते नारायणाय नमः, दूर्वां समर्पयामि॥३७॥
तैलानि च सुगन्धीनि द्रव्याणि विविधानि च। मया दत्तानि लेपार्थं गृहाण परमेश्वर॥३८॥
श्रीमते नारायणाय नमः, सुगन्ध तैलं समर्पयामि॥३८॥
हरिद्रा कुङ्कुमं चैव सिन्दूर कज्जलान्वितम्। सौभाग्य द्रव्य संयुक्तं गृहाण परमेश्वर॥३९॥
श्रीमते नारायणाय नमः, सौभाग्य द्रव्यं समर्पयामि॥३९॥
रत्न कङ्कण वैदूर्य मुक्ता हारादिकानि च। सुप्रसन्नेन मनसा दत्तानि स्वीकुरुष्व भोः॥४०॥
श्रीमते नारायणाय नमः, मुक्ता हारं समर्पयामि॥४०॥
वनस्पति रसोद्भूतो गन्धाढ्यः सुमनोहरः। आघ्रेयः सर्व भूतानां धूपोऽयं प्रतिगृह्यताम्॥४१॥
श्रीमते नारायणाय नमः, धूपं आघ्रापयामि॥४१॥
सुप्रकाशो महादीपः सर्वतस्तिमिरापहः। स बाह्याभ्यन्तरं ज्योति दीपोऽयं प्रतिगृह्यताम्॥४२॥
श्रीमते नारायणाय नमः, दीपं दर्शयामि॥४२॥
हस्त प्रक्षालनं करोमि।
सत्पात्र सिद्धं सुभगं विविधानेक भक्षणम्। निवेदयामि देवेश सानुगाय गृहाण तत्॥४३॥
श्रीमते नारायणाय नमः, नैवेद्यं निवेदयामि॥४३॥
एलो शीर लवङ्गादि कर्पूर परिवासितम्। प्रासनार्थं कृतं तोयं गृहाण परमेश्वर॥४४॥
श्रीमते नारायणाय नमः, मध्ये पानीयं समर्पयामि॥४४॥
बीजपूराम्र पनस खर्जूरी कदली फलम्। नारिकेल फलं दिव्यं गृहाण परमेश्वर॥४५॥
श्रीमते नारायणाय नमः, ऋतुफलं समर्पयामि॥४५॥
कर्पूर वासितं तोयं मन्दाकिन्या समाहृतम्। आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः॥४६॥
श्रीमते नारायणाय नमः, पुनराचमनीयं समर्पयामि॥४६॥
फलेन फलितं सर्वं त्रैलोक्यं सचराचरम्। तस्मात् फल प्रदानेन पूर्णाः सन्तु मनोरथाः॥४७॥
श्रीमते नारायणाय नमः, अखण्ड ऋतुफलं समर्पयामि॥४७॥
पूगी फलं महद्दिव्यं नागवल्ली दलैर्युतम्। एला चूर्णादि संयुक्तं ताम्बूलं प्रतिगृह्यताम्॥४८॥
श्रीमते नारायणाय नमः, ताम्बूलं समर्पयामि॥४८॥
हिरण्यगर्भ गर्भस्थं हेमबीजं विभावसोः। अनन्त पुण्य फलदमतः शान्तिं प्रयच्छ मे॥४९॥
श्रीमते नारायणाय नमः, दक्षिणां समर्पयामि॥४९॥
चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च। त्वमेव सर्व ज्योतींषि आर्तिक्यं प्रतिगृह्यताम्॥५०॥
श्रीमते नारायणाय नमः, आर्तिक्यं समर्पयामि॥५०॥
कदली गर्भ सम्भूतं कर्पूरं च प्रदीपितम्। आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव॥५१॥
श्रीमते नारायणाय नमः, कर्पूरार्तिक्यं समर्पयामि॥५१॥
नाना सुगन्धि पुष्पाणि यथा कालोद्भवानि च। पुष्पाञ्जलिर्मया दत्तो गृहाण परमेश्वर॥५२॥

श्रीमते नारायणाय नमः, पुष्पाञ्जलिं समर्पयामि॥५२॥
यानि कानि च पापानि जन्मान्तर कृतानि च। तानि सर्वाणि नश्यन्तु प्रदक्षिण पदे पदे॥५३॥
श्रीमते नारायणाय नमः, प्रदक्षिणां समर्पयामि॥५३॥
यस्य स्मृत्या च नामोक्त्या, तपो यज्ञ क्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥५४॥
आवाहनं न जानामि न जानामि विसर्जनम्। पूजां चैव न जानामि क्षम्यतां परमेश्वर॥५५॥
श्रीमते नारायणाय नमः, क्षमा प्रार्थनां समर्पयामि॥५५॥
यं ब्रह्मा वरुणेन्द्र रुद्र मरुतः स्तुन्वन्ति दिव्यैस्तवै-र्वेदैः साङ्गपदक्रमोपनिषदै-र्गायन्ति यं सामगाः।
ध्यानावस्थित तद्गतेन मनसा पश्यन्ति यं योगिनो, यस्यान्तं न विदुः सुरासुरगणाः देवाय तस्मै नमः॥५६॥
स शङ्ख चक्रं स किरीट कुण्डलं सपीत वस्त्रं सरसीरुहेक्षणम्।
स हार वक्षस्थल कौस्तुभ श्रियं, नमामि विष्णुं शिरसा चतुर्भुजम्॥५७॥
श्रीमते नारायणाय नमः, स्तुतिं समर्पयामि॥५७॥
नमोस्त्वनन्ताय सहस्रमूर्तये सहस्र पादाक्षि शिरोरु बाहवे।
सहस्र नाम्ने पुरुषाय शाश्वते सहस्र कोटि युगधारिणे नमः॥५८॥
श्रीमते नारायणाय नमः, साष्टाङ्ग प्रणामं समर्पयामि॥५८॥
गच्छन्तु च सुरश्रेष्ठाः स्वस्थानं परमेश्वराः। यजमान हितार्थाय पुनरागमनाय च॥५९॥
श्रीमते नारायणाय नमः, विसर्जनं समर्पयामि॥५९॥
अनया पूजा श्रीमन्नारायणः प्रीयतां न मम। इति पूजनम्।

**अथ तन्त्रोक्त मुद्रा निर्माण प्रकारः**

कुम्भ मुद्रा लक्षणम्
दक्षाङ्गुष्ठं पुराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन च। सावकाशां मुष्टिकां च कुर्यात् सा कुम्भ मुद्रिका॥१॥
अस्त्र मुद्रा लक्षणम्
दक्षस्य तर्जनी मध्ये सव्ये कर तले क्षिपेत्। अभिघातेन शब्दः स्यादस्त्र मुद्रा समीरिता॥२॥
अङ्ग न्यास मुद्रा लक्षणम्
हृन्नेत्रं त्रिभिराख्यातं द्वाभ्यामस्त्र शिरोमतम्। अङ्गुष्ठेन शिखा ज्ञेया दिग्भिः कवचमीरितम्॥३॥
आवाहन मुद्रा लक्षणम्
हस्ताभ्यामञ्जलिं बध्वानामिका मूल पर्वणोः। अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी स्मृता॥४॥
गन्ध मुद्रा लक्षणम्
मध्यमानामिकाङ्गुष्ठैरङ्गुल्यग्रेण भो प्रिये। दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः॥५॥
पुष्प मुद्रा लक्षणम्
अङ्गुष्ठ तर्जनीभ्याञ्च पुष्पचक्रे निवेदयेत्॥६॥
धूप मुद्रा लक्षणम्
मध्यमानामिकाभ्यां तु मध्य पर्वणि देशिकः। अङ्गुष्ठाग्रेण देवेशि धृत्वा धूपं निवेदयेत्॥७॥
नैवेद्य मुद्रा लक्षणम्
उत्तोलनं त्रिधा कृत्वा गायत्र्या मूल योगतः। तत्त्वाख्य मुद्रया देवि नैवेद्यं विनिवेदयेत्॥८॥
गरुड मुद्रा लक्षणम्
मिथस्तर्जनीके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा। मध्यमानामिके तु द्वौ पक्षाविव विचालयेत्॥

एषा गरुडमुद्रा स्याद्विष्णोः सन्तोष वर्धिनी॥९॥

प्रार्थना मुद्रा लक्षणम्

प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च सन्मुखौ। कुर्यात् स्वे हृदये सेयं मुद्रा प्रार्थन संज्ञिका॥१०॥

दहन मुद्रा लक्षणम्

दक्षे करतले रक्त पङ्कजे भास्करं स्मरन्। द्रव्याणि संस्पृशेत्तेन मुद्रैषा दहनात्मिका॥११॥

आप्यायन मुद्रा लक्षणम्

वाम हस्त तले श्वेत पङ्कजे शशिनं स्मरन्। द्रव्याणि संस्पृशेत्तेन मुद्रैषाप्यायनात्मिका॥१२॥

चक्र मुद्रा लक्षणम्

स्पष्टौ प्रसारितौ हस्तौ परस्पर नियोजितौ। भ्रमणाच्चक्रवत्तौ तु चक्र मुद्रेति कीर्तिता॥१३॥

## अथ पुरुष सूक्त पाठ विधिः

अथ पुत्रकामः शुचिः प्रयतः शुक्लाम्बरधरः श्रीचूर्णयुक्तः द्वादश श्वेतोर्ध्व-पुण्ड्रधरः पद्माक्ष तुलसी माला धरः शुद्धासनासीनो न्यासादिकं कृत्वा अहरहः षोडश पुरुष सूक्तं पठेत्। प्रणवः प्राक् युञ्जीत। (याज्ञवल्क्य शिक्षा, १/२७)

स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेत् बुधः। नाभ्या हन्यान्न निर्हन्यन्न गायेनैव कम्पयेत्॥२१॥

सममुच्चारयेद्वर्णान् हस्तेन च मुखेन च।॥२३॥ हस्त भ्रष्टः स्वरभ्रष्टो न वेद फलमश्नुते॥२४॥

शङ्कितं भीतमुद्धृष्टमव्यक्तमनुनासिकम्॥२६॥

काकस्वरं मूर्ध्नि गतं तथा स्थान विवर्जितम्। विस्वरं विरसञ्चैव विश्लिष्टं विषमाहताम्॥२७॥

व्याकुलं तालु हीनं च पाठ दोषाच्चतुर्दश॥२८॥

हस्त हीनं तु योऽधीते स्वर वर्ण विवर्जितम्। ऋग्यजुस्सामभिर्दग्धो वियोनिमुपगच्छति॥४०॥

स्वरहीनं तु योऽधीते मन्त्रं वेदविदो विदुः। न साधयति यजूंषि भुक्तमव्यञ्जनं यथा॥४१॥

ज्ञातव्यश्च तथैवार्थो वेदानां कर्म सिद्धये। पाठ मात्रावसानस्तु पङ्के गौरिव सीदति॥४३॥

(याज्ञवल्क्य शिक्षा)

गीती शीघ्री शिरः कम्पी यथा लिखित पाठकः। अनर्थोऽल्प कण्ठश्च षडेते पाठकाधमाः॥३२॥

माधुर्यमक्षर व्यक्तिः पदच्छेदस्तु सुस्वरः। धैर्यं लय समत्वं च षडेते पाठका गुणाः॥३३॥

(पाणिनीय शिक्षा)

जपे होमे मखे श्राद्धे ऽभिषेके पितृ कर्मणि। हस्त स्वरं न कुर्वीत सन्ध्यादौ देव पूजने॥

उपस्थाने जपे होमे मार्जने यज्ञ कर्मणि। कण्ठ स्वरं प्रकुर्वीत हस्त स्वर विवर्जितम्। (आह्निक सूत्र)

## अथ शुक्ल यजुर्वेद वर्णनम्

मन्त्र ब्राह्मणयोर्वेद नामधेयं तस्मिञ्छुक्ले याजुषाम्नाये माध्यन्दिनीयके मन्त्रे स्वर प्रक्रिया। (कात्यायन परिशिष्ट प्रतिज्ञा सूत्र, १)

ॐ मण्डलं दक्षिणमक्षि हृदयं चाधितिष्ठितं येन शुक्लानि यजूंषि भगवान् याज्ञवल्क्यो यतः प्राप्तं विवस्वन्तं त्रयीमयमर्चिषन्तमभिध्याय माध्यन्दिनीये वाजसनेयके यजुर्वेदाम्नाये सर्वे स खिले स शुक्रिय ऋषि दैवत छन्दांस्यनुक्रमिष्यामः॥ (१)

इ षेत्वादि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायने। (बृहदारण्यक उपनिषद्, ६/६/५)

ईशावास्य-बृहदारण्य-जाबाल-परमहंस-सुबाल-मन्त्रिका-निरालम्ब-त्रिशिखो-ब्राह्मण-मण्डल ब्राह्मणा- द्वयतारक -पैङ्गल-भिक्षु -तुरीयातीता-ध्या त्म-तारसार-याज्ञवल्क्य-शाट्यायनी-मुक्तिकानां शुक्ल यजुर्वेद गताना -मेकोनविंशति संख्यकानामुपनिषदां पूर्णमद इति शान्तिः। (मुक्तिकोपनिषद्, १/२/२)

अयात-यामानि तु भानु  गुप्तान्यन्यानि जातान्यति नीरसानि।
यजूंषि तेषामथ याज्ञवल्क्यो ह्ययात -यामानि रवे रवाप। (देवी भागवत पुराण)
शक्र सोमानि रुद्राश्च विश्वेदेवा-स्त्रिलोचनः। विधाता शङ्ख पाणिश्च तथा सप्तर्षयोऽमलाः॥ (वायु पुराण)
मृकण्ड कपिल व्यास याज्ञवल्क्य पराशराः। वाल्मीकिर्नारदोऽगस्त्य इत्येते वाजशाखिनः॥
वाजिविप्र विशेषेण श्राद्ध कर्म निरन्तरम्। शुक्लाः प्रशस्ताः कृष्णस्तु यजुरुक्त निषेधतः। (होलि भाष्य)
 तस्मात् कव्यानि हव्यानि दातव्यानि द्विजातये। वाजिने दत्तमेकं तु तत् कोटि गुणितं भवेत्॥
यजुर्वेद महा कल्प तरोरेकोत्तरं शतम्। शाखास्तत्र शिखाकारा दशञ्चाथ शुक्लगाः। (बृहन्नारदीय पुराण)
तत्रापि मुख्य विज्ञेयं शाखा माध्यन्दिनो यजुः॥ माध्यन्दिनी तु या शाखा सर्वसाधारिणी हि सा॥
तामेव च पुरस्कृत्य वसिष्ठेन प्रभाषितम्। (कल्पद्रुम)
यजुर्वेदस्य मूलं हि भेदो माध्यन्दिनीयकः। सर्वानुक्रमणी तस्याः कात्यायन कृता तु या॥ (होलि भाष्य)
माध्यन्दिन यजुर्वेदे खं ब्रह्मान्तमुदाहृतम्। तारपूर्वं हि त्रिगुणं नान्य शाखासु मुख्यतः॥ (गुह्यमाला)
समाप्यचोत्तरादि-र्यन्मन्त्र ब्राह्मणयोर्द्विजाः। ॐ खं ब्रह्मेति यो ध्यायन् दर्शकश्चोपवेधसः॥ (पराशर स्मृति)
ॐकारस्त्रिगुणः प्रोक्तः खं ब्रह्म त्रिगुणं तथा। माध्यन्दिनीय शाखानां यजुर्वेदे पठन्ति हि॥
शुक्ल कृष्णमिति द्वेधा यजुश्च समुदाहृतम्। शुक्लं वाजसनेयं तु कृष्णं स्यात्तैत्तिरीयकम्॥ (प्रतिज्ञा सूत्र भाष्य)
बुद्धिमालिन्य हेतुत्वात्तद्यजुः कृष्णमीर्यते। व्यवस्थित प्रकरणात्तद्यजुः शुक्लमीर्यते॥

**अष्टविध वेद पाठः**

जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः। अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः॥ (याज्ञवल्क्य शिक्षासूत्र)
अनुलोम विलोमाभ्यां त्रिवारं हि पठेत् क्रमः। विलोमे पदवत् सन्धिरनुलोमे यथा क्रमम्॥
ब्रूयात् क्रम विपर्यासा वर्धर्चस्या दितोऽन्ततः। अन्तं चादि नयेदेवं क्रमं मालेति कीर्त्यते॥
पादोत्तरां शिखामेव शिखामार्याः प्रचक्षते। क्रमाद् द्वि त्रि चतुः पञ्च पद क्रममुदाहरेत्॥
पृथक् पृथग्विपर्यस्य लेखामाहुः पुनः क्रमात्। ब्रूयादादेः क्रमं सम्यगन्तादुत्तारयेदिति॥
वर्गे वा ऋचि वा पत्र पठनं स ध्वजः स्मृतः। क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तमम्।॥
अर्धर्चादेवमेवोक्तः क्रम दण्डो विधीयते। पादशोऽर्धर्चशो वापि सहोक्त्या दण्डवद्रथः॥
अन्त क्रमं पठेत् पूर्वमादि पर्यन्तमानयेत्। आदि क्रमं नयेदन्तं घनमाहुर्मनीषिणः॥इति॥

**अथ माध्यन्दिनी शाखा प्रशंसा**

सन्मूलो यजुराख्य वेद-विटपी जीयात्सा माध्यन्दिनिः,
शाखा यत्र युगेन्दु-काण्ड सहिता यत्रास्ति सा संहिता।
यत्राभ्राब्धि लता विभान्ति शर शैलाङ्केन्दुभी ऋग्दलैः,
पञ्चद्वीषु नभोऽङ्क वर्ण मधुपैः खाग्न्यर्क गुङ्गुञ्जितैः॥

**अथ पुत्रार्थ विभाण्डक चरु विधिः**

अथातः सम्प्रवक्ष्यामि विधिं पावनमुत्तमम्। अस्मात्तातस्य तातोऽयं रघु पौत्राय धीमते॥
(बृहत् पाराशर स्मृति, ९/२८९)
अनपत्यस्य पुत्रार्थं कुर्याद्वै भाण्डिकस्तु यम्। सहस्रशीर्ष सूक्तस्य विधानं चरु पाक कृत्॥२९०॥
यैर्यैर्नृपैः कृतं पूर्वमन्यैरपि द्विजोत्तमैः। सिद्ध्यन्ति सर्व मन्त्राणि विधिविद्भिर्द्विजोत्तमैः॥२९१॥
उपासितानि सद् भक्त्या श्रोत्रियैः श्रुति पारगैः। आत्मविद्धि निराहारै-र्वेदिभि-र्मन्त्रवित्तमैः॥२९२॥
क्रियमाणाः क्रियाः सर्वाः सिद्ध्यन्ति ब्रह्मचारिभिः। न पाठान्न धनात् स्नाना-न्नात्मनः प्रतिपादनात्॥२९३॥

प्राक्तनात् कर्मणः पुंसां सर्वा भवन्ति सिद्धयः। शुक्ल पक्षे शुभे वारे शुभ नक्षत्र गोचरे॥२९४॥
द्वादश्यां पुत्र कामाय चरुं कुर्वीत वैष्णवम्। दम्पत्योरुपवासश्च ह्येकादश्यां सुरालये॥२९५॥
मन्त्रैः षोडशभिः सम्यगर्चयित्वा जनार्दनम्। चरुं पुरुष सूक्तेन श्रपयेत् पुत्र काम्यया॥२९६॥
प्राप्नुयाद्वैष्णवं पुत्रं चिरायुः सन्तति क्षमम्। द्वादशीं द्वादशी सम्यग्विधिवन्निर्वपेच्चरुम्॥२९७॥
यः करोति इहोपास्तिं विष्णोस्तु परमं पदम्। हुत्वाज्यं विधिवत् पूर्वमग्नौ षोडशभिस्ततः॥२९८॥
समिधोऽश्वत्थ वृक्षस्य हुत्वाज्यं जुहुयात् पुनः। उपस्थानं ततः कृत्वा ध्यात्वा च मधुसूदनम्॥२९९॥
हविर्होमं पुनः कृत्वा जुहुयाच्च घृताहुतीः। हविशेषं नमस्कृत्य नारी नारायणं प्रति॥३००॥
संप्राश्य च हविः शेषं लब्ध्वाशीश्च वसेद् गृहे। ततः कृत्वा त्विदं कर्म कर्त्तव्यं द्विज तर्पणम्॥३०१॥
असूता मृत पुत्रा च या च कन्याः प्रसूयते। क्षिप्रं सा जनयेत् पुत्रं पाराशर वचो यथा॥३०२॥
होमान्ते दक्षिणां दद्याद्धेनुं वासस्तथा तिलान्। भूमिं हिरण्य रत्नानि यथा सम्भवमेव च॥३०३॥
य सिद्ध मन्त्रे सततं द्विजेन्द्राः सम्पूज्य विष्णुं विधिवत् सुतार्थी।
इदं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरेः प्रसादात्॥३०४॥ इति॥

**अथ ऋष्यशृङ्गोक्त सन्तान यागः**

ऋषय ऊचुः-सूत सूत महाप्राज्ञ सर्वशास्त्र विशारद। सन्तान यागं नो ब्रूहि को विधिस्तत्र किं फलम्॥१॥
सूत उवाच-शृणुध्वं ऋषयः सर्वे पुंसूक्त विधिमादरात्। पूर्वं सनत्कुमारेण पृष्टो विष्णुः सनातनः॥२॥
उक्तवान् पौरुषं होम विधानं पुत्र सत्फलम्। वसिष्ठायोदितं तेन चात्रेयं सोऽब्रवीदिदम्॥३॥
बोधनाय तेनोक्तं स स्वशिष्येभ्य उक्तवान्। वक्ष्यामि तदहं सम्यक् शृणुध्वं मुनिसत्तमाः॥४॥
पुत्रप्रदमपुत्राणां जयदं जय कामिनम्। श्रीदं श्रीकामिनां पुंसां राज्यदं राज्य कामिनाम्॥५॥
धान्यदं धान्य कामानां कीर्त्तिदं कीर्त्ति कामिनाम्।
मुक्तिदं मुक्ति कामानां मोक्षदं मोक्ष कामिनाम्॥६॥
बहुना किमिहोक्तेन सर्व सिद्धिप्रदं नृणाम्। ये कुर्वन्ति नरः श्रेष्ठाः पुंसूक्तं हवनं ततः॥७॥
सन्तान फलदं नॄणां तेषां श्री भूमि संयुतम्। सन्तुष्टो भगवान् विष्णुः धर शार्ङ्ग गदाब्जभृत्॥८॥
ददाति स तनूजा वै स्वतुल्यानचिरेण सः। यद्यदिच्छन्ति मनुजाः तत्तन्नूनमवाप्नुयुः॥९॥
ऋषय ऊचुः-व्यास शिष्य महाबाहो सूत तत्त्वार्थवित्तम। विधानं कर्मणो ब्रूहि पुंसूक्त हवनस्य भो॥१०॥
एवमुक्तो मुनिगणैः विधिं सूत उदाहरत्। आरभ्य शुक्ल प्रथमां कृष्ण प्रतिपदन्ततः॥११॥
षोडशश्चापि घस्रेषु चैकैकस्मिन् सहस्रकम्। पायसैर्जुहुयुर्विप्राः वित्त शाठ्य विवर्जिताः॥१२॥
पुंसूक्तोक्ताभिरेताभिः ऋग्भिः षोडशभिस्ततः। ब्राह्मणान् भोजयेत् पश्चात् यथा विधि विधानतः॥१३॥
सन्तानं विष्णु सदृशमवाप्नुयादचिरेण वै। तावद्धोम क्रियाशक्तौ द्वादशाहं हुवेद् व्रती॥१४॥
तदशक्तो षड्दिनं वा वित्त शाठ्यं न कारयेत्। उत्तमं षोडश दिनं द्वादशाहं तु मध्यमम्॥१५॥
अधमं षडहं प्रोक्तं शक्तौ कुर्यात् क्रियोत्तमम्। शक्तौ सत्यान्तु यो मूढः कारयेन् मध्यमाधमौ॥१६॥
नावाप्नोति स सन्तानं विष्णु प्रीतिं न संशयः। तस्मात् सर्व प्रयत्नेन कारयेत् उत्तमं सुधीः॥१७॥
होमाशक्तौ जपेत्तावत् तदशक्तौ सकृद्धनेत्। विष्णु ऋक्षे वा मासि द्वादश्यां सित कृष्णयोः॥१८॥
यदा कदा वा पुं यज्ञे मानसं वै प्रवर्तते। तदारभ्य दिनेष्वेषु षोडशेष्वपि तं यजेत्॥१९॥
द्वादश्यां वा यथा विष्णु तारे वा षोडशं दिनम्। भवेत्तथा पुं हवनं आरभेत विचक्षणः॥२०॥
विशेषतो गर्भ चिह्ने सम्प्राप्ते तु तृतीयके। मासि षोडश घस्रेषु कुर्यात् पुं हवनं बुधः॥२१॥
एवं कुर्याच्चतुर्थे वा पञ्चमे मासि वा ततः। महा विष्णु प्रसादेन पुत्र प्राप्तिर्भवेद् ध्रुवम्॥२२॥

ऊर्ध्वं न कुर्याद् गर्भस्थ शिशो स्त्री पुंस लक्षणात्। ततः परं कृताद्धोमात् शिशोरायुष्य धीर्गुणाः॥२३॥
भवेयुः सर्व मासेषु कुर्यात् पुं सूक्त होमकम्। स्त्री जन्म वा पुत्र जनिर्यथा चिह्नं तथा भवेत्॥२४॥
सा प्रजायुष्य धैर्यादि सर्व लक्षण संयुता। एतत् पुं हवनात् पूर्वमाचार्यात् पुत्र सिद्धये॥२५॥
सन्तान गोपालकाख्यं वा मन्त्रं स्वीकृत्य चारभेत्। आचार्य सोमयाजी चेत् श्रोत्रियो वापि कर्मठः॥२६॥
वृद्धो वा वयसा हीनः स एवाचार्यको भवेत्। इत्थं षोडश घस्रेषु गतेषु च ततः परम्॥२७॥
यावत् पञ्चम मासं वै तावदभ्यर्च्य केशवम्। नवनीत मये यन्त्रे नित्यं साष्ट सहस्रकम्॥२८॥
जपित्वा प्राशयेत् सद्यो गर्भिणी सुतमाप्नुयात्। जपेत्ततः परमपि गर्भस्थ तनयस्य हि॥२९॥
कुर्यात् प्रज्ञादि वृद्ध्यार्थमासृति द्विज सत्तमाः। त्रिरसा वृत्ति सहितं जपं कुर्यात् दिने दिने॥३०॥
प्रातः स्नानादिकं कृत्वा ध्यात्वा मनसि माधवम्। गणेशमादौ सम्पूज्य प्रत्यूहस्योपशान्तये॥३१॥
ब्राह्मणानामनुज्ञां च कृत्वा कर्म समाचरेत्। अनुज्ञायां षोडश वा द्वादशाष्टौ च वापि षट्॥३२॥
गृहीत्वा चतुरो वा कृच्छ्रन्तस्यार्धकं पुनः। दद्यादाचार्यवर्याय ह्यर्थमन्यद् द्विजन्मनम्॥३३॥
सङ्कल्प्य कामान्विविधान् मनो-वाक्कायकानपि। पुण्याहं तु ततः कृत्वा ह्याचार्यं वृणुयात् ततः।३४॥
स्वकर्म निरतं शान्तं श्रोत्रियं कर्म कोविदम्। सन्तुष्ट मानसं सम्यक् दरिद्रञ्च कुटुम्बिनम्॥३५॥
सोमयाज्युत्तमः प्रोक्तः तदलाभे पुरोक्तकः। दुकूल वस्त्र युगलं दक्षिणा कुण्डलादिभिः॥३६॥
आचार्यं पूर्वमभ्यर्च्य वृणुयाद्दर्भ दानतः॥ तेनैव कारयेत् कर्म पुं सूक्त हवनादिकम्॥३७॥
कर्म ध्यानमना भूत्वा ह्याचार्य वशगो गृही। आचार्यो यजमानेन युक्तः षड्भिरथाष्टभिः॥३८॥
चतुर्भिर्वाथ ऋत्विभिः पुं हवं कर्म चारभेत्। सङ्कल्पमादौ कुर्वीत कलशाचार्यादिकं ततः॥३९॥
स्वगृह्योक्त विधानेन कुर्यादाचार्य गृह्यतः। उल्लेखन प्रणीतान्तं कृत्वा कर्म ततः परम्॥४०॥
ततः पुरुष सूक्तेन न्यसित्वा स्व शरीरके। होम कुण्ड पुरो भागे कुम्भे विष्णुं समर्चयेत्॥४१॥
द्रोण द्वयमितं धान्यं तदर्धं तण्डुलं ततः। माषान् तदर्धं तस्मादर्धं तिलात्तत्र लिखेत् कजम्॥४२॥
उपर्युपरि निक्षिप्य क्रमात्तत्र घटं न्यसेत्। द्रोण द्वयमितं कुम्भं त्रयुतान्तमयं तु वा॥४३॥
पञ्च पल्लव तत्वाद्यैर्नारिकेल फलेन च। दश हस्त प्रमाणेन दुकूलेन च वेष्टयेत्॥४४॥
निधाय प्रतिमां तत्र दश निष्क सुवर्णतः। निष्क स्वर्ण कृतां वापि चतुर्हस्तां मनोहराम्॥४५॥
विष्णुरूपां च निर्माय श्री रूपाञ्च द्विबाहुकाम्। या चान्विता कुम्भे वै निधाय पृथगर्चयेत्॥४६॥
पृथक् पूजा क्रिया शक्त्या वैकस्मिन्वार्श्रियाज्यया। सहितं विष्णुमभ्यर्चं ऋग्भिः षोडशभिः क्रमात्॥४७॥
पृथक् कृतायां पूजायां तत्र भू पूजनं न हि। श्री सूक्तेन श्रियाः पूजां कुर्यात् सन्तान सिद्धये॥४८॥
यजमानं सपत्नीकं संहृत्युत्पत्ति संस्थितीन्। न्यासान् पुरुष सूक्तेन षोडशार्चेन वै द्विजाः॥४९॥
ऋषय ऊचुः-सूत न्यास विधिं न्यास विधानं च वद प्रभो॥५०॥
सूत उवाच-अस्य श्री षोडशर्चस्य पुं सूक्तस्य महर्षयः॥५१॥
अन्तर्यामी च भगवानृषिर्नारायणः स्मृतः। छन्दोऽनुष्टुब् रमा भूमिः पुं विष्णुर्देवता महान्॥५२॥
बीजं पुरुष एवेति नान्यः पन्थास्ततः परम्। एतावान् कीलकं प्रोक्तमिष्टार्थे विनियोजकः॥५३॥
अतो देवा इति च शक्यो जप्त्वा ततः क्रमात्। पुरुषाय महद् ब्रह्म विष्णु रुद्राखिलेषु वै॥५४॥
पुरुषं योजयेत् पश्चात् चतुर्थ्यन्तेन विन्यसेत्। अङ्गुष्ठादीन् हृदादीन् च न्यसित्वा ध्यानमाचरेत्॥५५॥
गोक्षीराभं पुण्डरीकाक्षं चक्राब्जाभ्यां शंख कौमोदकीभ्याम्।
श्री भूमिभ्यामर्चितं योग पीठे ध्यायेद्देवं पूजयेत् पौरुषेण॥५६॥
इति ध्यात्वा महाविष्णुं तत्पश्चात् न्यासमाचरेत्। वामाङ्काद्यङ्काचरण जानूरू युग्मेषु नाभौ।

हृत्कण्ठां स द्वितय वदना क्षुत्तमाङ्गेषु मन्त्री॥५७॥
पुं सूक्तस्थैर्न्यसितु मनुवित् संहृतौ शीर्ष पूर्वम्। स्पृष्टो नाभि प्रभृति हृदयान्तं स्थितौ च क्रमेण।
इति न्यास त्रयं कृत्वा ह्याचार्यस्योपदेशतः॥५८॥
वितते कदली पत्रे साग्रे निम्नादिवर्जिते। नवनीतं प्रसार्याथ तत्र पुं सूक्त यन्त्रकम्॥५९॥
लिखित्वा तत्र पुरुषं श्री भूमि सहितं यजेत्। नवनीत मये यन्त्रे यजमानोऽर्चयेद्धरिम्॥६०॥
पुं सूक्तस्थैः सुमनुभिः षोडशैरुपचारकैः।
ऋषय ऊचुः-व्यास देशिक तद्यन्त्रं विधानं ब्रूहि तत्त्वतः॥६१॥
इत्युक्तो मुनिभिः सम्यक् यन्त्रं ब्रूते महामुनिः।
श्री सूत उवाच-शृणुध्वं भो योगिवर्या वच्मि यन्त्रं सुतप्रदम्॥६२॥
षट्कोण कर्णिका मध्ये तारं साध्य समन्वितम्। सुदर्शन षडर्णञ्च षट्कोणेष्वस्य सन्धिषु॥६३॥
तदङ्गानि चतुष्पात्रे केशरेषु क्रमेण च। गोपालक चतुर्वर्णं मन्त्रस्यैकैकमक्षरम्॥६४॥
दलेषु द्वादशार्णस्य त्रीणि त्रीण्यक्षराणि तु। अष्टपत्रे केशरेषु चाष्टार्णे चैकमक्षरम्॥६५॥
नृसिंहानुष्टुभो वर्णान् चतुरश्चतुरस्तथा। सुदर्शन द्व्यष्ट वर्णान् केशरे षोडशच्छदैः॥६६॥
ऋचां पुरुष सूक्तस्य क्रमात् षोडशकं बहिः। मात्रकोर्णोल्लसद् वृत्तं भूपुरास्तत्र तारकम्॥६७॥
यन्त्रं पुरुष सूक्तस्य पुत्रायु कीर्ति वर्द्धनम्। सर्व पाप हरं श्रीदं धर्मार्थ सुख मोक्षदम्॥६८॥
आद्ययावाहयेद्देवमासनं तु द्वितीयया। पाद्यं तृतीयया दद्यात् चतुर्थ्यार्घ्यं समाचरेत्॥६९॥
पञ्चम्याचमनीयं तु षष्ट्या स्नानं ततः परम्। सप्तम्या वस्त्र दानं वै चाष्टम्या तूपवीतकम्॥७०॥
दद्यान्नवम्या गन्धं तु दशम्या पुष्पमर्पयेत्। एकादश्या तथा धूपं द्वादश्या तु प्रदीपकम्॥७१॥
त्रयोदश्यात्तु नैवेद्यं चतुर्दश्या कुसुमाञ्जलिम्। प्रदक्षिणं पञ्चदश्या षोडश्योद्यापन क्रमात्॥७२॥
प्राण प्रतिष्ठां यन्त्रेण पुरोधास्तदनन्तरम्। अग्नावभ्यर्चयेद्विष्णुं पूर्बोक्ते नैव वर्त्मना॥७३॥
स्वयं होमे स्व वह्निः स्यादन्य होमे तु लौकिकः। ताभिः षोडशभिः पूर्वं हुवेदाज्याहुतीः क्रमात्॥७४॥
पक्वाहुतीस्ततस्ताभिः अवदान विधानतः। पुरोऽनुवाक्ये नैवात्र जुहुयात् सर्पिराहुतिः॥७५॥
समिधो जुहुयात्ताभिः अश्वत्थाः क्रमशो द्विजाः। एकैक होमतः पश्चादग्नेर्दक्षिणतो द्विजाः॥७६॥
संस्थाप्य दर्भान् प्रागग्रान् एकत्रे नासनच्छदान्। अष्टौ संस्थाप्य चान्यत्र तथोदगपवर्गतः॥७७॥
अश्वत्थ पत्रमेकैकं स्थापयेद् ऋग्जपः क्रमात्। ताभिराज्याहुतीः कुर्यात् एकैकस्या अथाहुतेः॥७८॥
क्रमादश्वत्थ पत्रेषु स दण्डेषु यथाक्रमम्। ताभिः षोडशभिश्चग्भिः उपस्तीर्यान् महर्षयः॥७९॥
हस्तेन जुहुयात् पत्रे होममर्धमतः परम्। क्रमादश्वत्थ पत्रेषु निक्षिपेत क्रमात् पुनः॥८०॥
ताभिराज्याहुतीः कुर्यात् एकैकस्या तथाहुतेः। पश्चाद् क्रमाद् ऋग् जपः पायसान्यभिधारयेत्॥८१॥
चलच्छपच्छदैः चग्भिः पिधेयात् पायसान्यथा। आचार्यो यजमानेन सार्धमृत्विभिरप्यथ॥८२॥
जुहुयात् पायसं वह्नौ अष्टोत्तर सहस्रकम्। षष्ठ्या वृत्त्या त्र्यधिकया षोडशानामृचां क्रमात्॥८३॥
अष्टाधिकं सहस्रं तु भवेत् संख्या द्विजर्षभाः। ततः स्विष्ट कृतो भूत्वा रुद्रायाणामथो जपान्॥८४॥
अभ्यातानां राष्ट्रभूतः प्रजापतिमतः परम्। व्यस्ताश्च ज्याहुतीर्हुत्वा यदस्येति च मन्त्रकम्॥८६॥
अस्मिन् कर्मण्यनाज्ञात प्रायश्चित्तादिकं पुनः। पूर्णाहुतिमथो हुत्वा तदन्ते गां सतर्णकाम्॥८६॥
आचार्याय वरं दद्यात् होम शेषं समापयेत्। पुनः पूजां च नैवेद्यं पायसं मोदकादिकम्॥८७॥
पञ्चास्य दीपं पश्चात्तु नीराजनमतः परम्। प्रदक्षिणा नमस्कारः प्रार्थयेद् वाञ्छितं पुनः॥८८॥
कुम्भादुद्वासयेद्देवं यन्त्रान्नोद्वासयेद्धरिम्। सर्वदा श्रावणे मासे पुं सूक्त हवनं द्विजाः॥८९॥

ऋत्विग्भ्यो दक्षिणां दद्यात् यथा शक्ति ततः परम्। आचार्याय विशेषेण गोद्वयं वत्स संयुतम्॥९०॥
एकैकस्मिन् दिनेत्येयं दक्षिणा दीयतां बुधैः। आचार्यो यदि तुष्टः स्यात् सर्व शान्तिर्भविष्यति॥९१॥
आचार्य दक्षिणा तस्माद् दीयतां प्रतिवासरम्। कुम्भोपकरणं सर्वमाचार्याय निवेदयेत्॥९२॥
हरि लक्ष्मी प्रतिमयोर्नक्तं कुर्यात्तथार्चनम्। तप्त क्षीरं तु नैवेद्यं प्राशयेद्दम्पती च तत्॥९३॥
होमान्ते प्रतिमा युग्मं स वस्त्रश्चैव दक्षिणाम्। आचार्याय सदीपं वै दद्यात् सत्पुत्र सिद्धये॥९४॥
एतत् कर्म द्विधा प्रोक्तं समष्टि व्यष्टि भेदतः। समष्टौ षोडशिनमेकं कर्म तथार्त्विजः॥९५॥
आषोडशिनं कुम्भे माघे क्षिप्तं दिने तु तत्। कुम्भान्नोद्वासयेद्देवमुत्थानं षोडशे दिने॥९६॥
सम्पात प्रासनं चापि ऋत्विगाचार्य दक्षिणा। अनुज्ञा सकृदेव स्यात् कुम्भ रत्नं च तत्समम्॥९७॥
ऋत्विजां यजमानस्य तत्पत्न्या देशिकस्य च। कर्म मध्ये तु नाशौचमन्त एव तु तद् भवेत्॥९८॥
व्यष्टौ प्रतिदिनं कुर्यादनुज्ञां गण पूजने। एकं कृच्छ्रमनुज्ञायां तदाचार्याय दीयताम्॥९९॥
कुम्भरत्नं स्वर्ण पुष्पमृत्विगाचार्य दक्षिणाम्। सम्पातः प्राशनं चापि नित्यं कुर्यादतन्द्रितः॥१००॥
सम्पात प्रासनादेव गर्भ वृद्धि दिने दिने। तस्मादिदं कर्म शिष्टाः कुर्वन्ति व्यष्टि रूपतः॥१०१॥
कर्मारम्भस्तत्समाप्तिर्वै तद् दिवसे भवेत्। क्रिया मध्ये तु तत् कर्तुस्तत्पत्न्या देशिकस्य च॥१०२॥
आशौचाद्यन्तरायश्चेत् स्विष्टं कर्म तदन्ततः। कुर्यादतो व्यष्टिरेव कार्या सन्तान सिद्धये॥१०३॥
यजमानोश्च तत्पत्न्यै क्रमात् सम्पातमादितः। दद्यात् ऋग्जप पूर्वं तु तत्प्राश्य ततः परम्॥१०४॥
तेनैवाश्वत्थ पत्रेण कुम्भ तोयं पिबेत् क्रमात्। एवं प्रतिदिनं कुर्यात् सम्पात प्रासनं तथा॥१०५॥
प्रतिमा युगलश्चैव कुम्भ युग्मं सदक्षिनम्। वस्त्र युग्मं च विप्रेन्द्रा होमान्ते षोडशे दिने॥१०६॥
आचार्याय वै दद्यात् जीव सन्तान सिद्धये। ब्राह्मणान् भोजयेत् पश्चात् षड्रसैः क्रोधवर्जितः॥१०७॥
आशीर्वादं भोजनान्ते कुर्याद् ब्राह्मण दक्षिणाः। यथा शक्ति दिशेत् पश्चादाचार्याय विशेषतः॥१०८॥
सम्भावनां तथा तोषं गो वस्त्रादि समन्वितम्। छन्दोगानां बह्वृचानां कुर्यात् स्विष्ट कृदादयः॥१०९॥
औत्तरं तन्त्रके स्व स्वसूत्रेणैव मुनीश्वराः। अथवार्चाय सूत्रेण कुर्यात् पुं हवनं सुधीः॥११०॥
दिनानि षोडशैवं वै कृत्वा पश्चात् परेऽहनि। कुर्याद्धोमं विना सूर्य प्रतिमां च विना मुदा॥१११॥
गोधूम तण्डुले प्रस्थ युग्मके सूर्य पूजनम्। त्रिकाल पूजा तत्पश्चात्तद्दानञ्च समाचरेत्॥११२॥
प्रस्थद्वय मिते जीव ध्याने धेनुं निधाय च। सवत्सां पूजयेद्विप्राः सन्तान तिल होमवत्॥११३॥
ततो नूतन वस्त्राणि जाया पति धृतानि वै। हरिद्राक्तानि दीपार्घ्य पात्र युक्तानि मोदतः॥११४॥
आचार्यायैव देयानि नान्यस्मै पुत्र सिद्धये। आचार्येणैव वैलेख्यं नित्यं पुं सूक्त यन्त्रकम्॥११५॥
अन्येन लिखितं चेत्स्यात् सह पत्न्यात्मनाशनम्। उत्तानपादश्च महानिदं कृत्वाप्तवान् ध्रुवम्॥११६॥
मार्कण्डेयं च तत्तात जयन्तं च शचीपतिः। कीर्तिमान् तनयं लेभे चैतत् कर्म प्रभावतः॥११७॥
बहुनात्र किमुक्तेन संग्रहेण वदाम्यहम्। मरीच्यादि मुनिश्रेष्ठा राजानश्चाप्यजादयः॥११८॥
लब्ध्वाच्युत समान् पुत्रान् लेभिऽन्ते ऽच्युतालयम्। ऋष्यशृङ्गेण कथितमिदं पुंसवनं नराः॥११९॥
ये कुर्वन्ति नरश्रेष्ठस्ते भवेयुः सपुत्रिणः। लब्ध्वेह सकलान् भोगान् प्राप्नुयुर्हरिमन्ततः॥१२०॥
इत्यादि सनत्कुमार संहितायामुत्तर भागे ऋष्यशृङ्गोक्त सन्तान याग विधिर्नामाष्ट सप्तति तमोऽध्यायः॥

**अथ ऋग्विधानोक्त सन्तान यागः**

शुक्ल पक्षे शुभे वारे सु-नक्षत्रे सु गोचरे। द्वादश्यां पुत्र कामाय चरुं कुर्वीत वैष्णवम्॥१॥
दम्पत्योरुपवासः स्यादेकादश्यां सुरालये। ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम्॥२॥
चरुं पुरुष सूक्तेन श्रपयेत् पुत्र काम्यया। प्राप्नुयाद्वैष्णवं पुत्रमचिरात् सन्तति क्षमम्॥३॥

द्वादश द्वादशीः सम्यक् पयसा निर्वपेच्चरुम्। यः करोति हयस्थस्याद्याति विष्णोः परं पदम्॥४॥
हुत्वाग्निं विधिवत् सम्यगृग्भिः षोडशभिर्बुधः। कृताञ्जलि पुटो भूत्वा स्तवन्ताभिः प्रयोजयेत्॥५॥
केशवं मार्गशीर्षे तु पौषे नारायणं तथा। माधवं माघमासे तु गोविन्दं फाल्गुने पुनः॥६॥
चैत्रे चैव तथा विष्णुं वैशाखे मधुसूदनम्। ज्येष्ठे त्रिविक्रमं विद्यादाषाढे वामनं विदुः॥७॥
श्रावणे श्रीधरं विद्यात् हृषीकेशं ततः परे। आश्विने पद्मनाभं तु दामोदरं च कार्त्तिके॥८॥
द्वादशैतानि नामानि ऋष्यशृङ्गोऽब्रवीन् मुनिः। पूजयेन् मानसभिः सर्वान् कामान् समश्नुते॥९॥
आयुष्मन्तं सुतं सूते पर मेधा समन्वितम्। धनवन्तं प्रजावन्तं धार्मिकं सात्विकं तथा॥१०॥
समिधोऽश्वत्थ वृक्षस्य हुत्वाग्निं जुहुयात् पुनः। उपस्थानं हुताशस्य ध्यात्वार्च्य मधुसूदनम्॥११॥
हविर्होमं ततः कुर्यात् प्रत्यृचं वाग्यतः शुचिः। सूक्तेन जुहुयादाज्यमादावन्ते च पूर्ववत्॥१२॥
हविः शेषं नमस्कृत्य नारी नारायणं पतिम्। भक्षयित्वा हविः शेषं लब्धाशीः संविशेत् क्षणम्॥१३॥
ततस्तु कृत्वेदं कर्म कर्त्तव्यं द्विज तर्पणम्। द्वितीयं स्त्री निवर्तेत यावद् गर्भं न विन्दति॥१४॥
अपुत्रा मृत पुत्रा वा या च कन्या प्रसूयते। क्षिप्रं सा जनयेत् पुत्रं ऋष्यशृङ्गो यथाऽब्रवीत॥१५॥
अर्चनं सम्प्रवक्ष्यामि विष्णोरमित तेजसः। यत् कृत्वा मुनयः सर्वे ब्रह्म निर्वाण माप्नुयुः॥१६॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च। षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम्॥१७॥
अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम्। प्रतिमा स्वल्प बुद्धीनां योगिनां हृदये हरिः॥१८॥
तस्य सर्वगतत्वाच्च स्थण्डिले भवतात्मनाम्॥१९॥
दद्यात् पुरुष सूक्तेन यः पुष्पाण्यप एव वा। अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम्॥२०॥
अनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता। पुरुषोऽथ जगद्बीजमृषिर्नारायणः स्मृतः॥२१॥
नारायण महाबाहो शृणुष्वैकं महाप्रभो। वक्ष्ये पुरुष सूक्तस्य विधानं त्वर्चनं प्रति॥२२॥
अग्नि कार्यं जप विधिं स्तोत्रञ्चैव तदात्मकम्। स्नात्वा यथोक्त विधिना प्राङ्मुखः शुद्ध मानसः॥२३॥
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे। तृतीयां वाम पादे च चतुर्थीं दक्षिणे न्यसेत्॥२४॥
पञ्चमीं वाम जानुनि षष्ठीं वै दक्षिणे न्यसेत्। सप्तमी वाम कुक्षौ तु अष्टमीं दक्षिणे न्यसेत्॥२५॥
नवमी नाभि देशे तु दशमीं हृदये न्यसेत्। एकादशीं कण्ठदेशे द्वादशीं वाम बाहुके॥२६॥
त्रयोदशीं दक्षिणे च आस्ये चैव चतुर्दशीम्। अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्ध्नि विन्यसेत्॥२७॥
एवं न्यास विधिं कृत्वा पश्चात् पूजां समारभेत्। यथा देहे तथा देवे न्यासं कृत्वा विधानतः॥२८॥
आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम्। द्वितीययासनं दद्यात् पाद्यं चैव तृतीयकम्॥२९॥
अर्घ्यं चतुर्थ्यां दातव्यं पञ्चम्याचमनीयकम्। षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव तु॥३०॥
यज्ञोपवीतमष्टम्या नवम्या चानुलेपनम्। पुण्यं दशम्या दातव्यमेकादश्या तु धूपकम्॥३१॥
द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेदनम्। चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणम्॥३२॥
षोडश्योद्वासनं कुर्याद्देवदेवस्य चक्रिणः। स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्॥३३॥
ततः प्रदक्षिणां कृत्वा जपं कुर्यात् समाहितः। यथाशक्ति जपित्वा तु सूक्तं तस्मै निवेदयेत्॥३४॥
देवस्य दक्षिणे पार्श्वे कुण्डं स्थण्डिलमेव वा। ततः कारयेत् प्रथमेनैव द्वितीयेन तु प्रोक्षणम्॥३५॥
तृतीययाग्निमादध्याच्चतुर्थ्या च समिन्धनम्। पञ्चम्याज्यस्य श्रपणं चरोश्च क्षपणं तथा॥३६॥
षष्ठेनैवाग्नि मध्ये तु कल्पयेत् पद्ममासनम्। चिन्तयेद्देवदेवेशं कालानल समप्रभम्॥३७॥
ततो गन्धं च पुष्पं च धूप दीप निवेदनम्। अनुज्ञाप्य ततः कुर्यात् सप्तम्यादि यथा क्रमम्॥३८॥
समिधस्तावतीः पूर्वं जुहुयादभिधारिताः। ततो घृतेन जुहुयाच्चरुणा च ततः पुनः॥३९॥

एवं हुत्वा ततश्चैवमनुज्ञाप्य यथा क्रमम्। अग्नेर्भगवतस्तस्य समीपे स्तोत्रमुच्चरेत्॥४०॥
जितं ते पुण्डरीकाक्षं नमस्ते विश्व भावन। सुब्रह्मण्य नमस्तेस्तु महापुरुष पूर्वज॥४१॥
नमो हिरण्यगर्भाय प्रधानव्यक्त रूपिणे। ॐ नमो वासुदेवाय शुद्ध ज्ञान स्वरूपिणे॥४२॥
देवानां दानवानां च सामान्यमसि दैवतम्। सर्वदा चरण द्वन्द्वं ब्रजामि शरणं तव॥४३॥
एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा।अव्यक्तश्चानुमन्ता च गुण माया समावृतः॥४४॥
संसार सागरं घोरमनन्त क्लेश भाजनम्। त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः॥४९॥
न ते रूपं न चाकारो नायुधानि न चास्पदम्। तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे॥४६॥
नैव किञ्चिदसाध्यं ते न च साध्योऽसि कस्यचित्।॥४७॥
कार्याणां करणं पूर्वं वचसां वाच्यमुत्तमम्। योगिनां परमां सिद्धिं विन्दन्ति परमं विदः॥४८॥
अहं भीतोऽस्मि देवेश संसारेऽस्मिन् महा भये। त्राहि मां पुण्डरीकाक्ष न जाने परमं पदम्॥४९॥
कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत। शरीरे च गतौ वापि वर्तते मे महद् भयम्॥५०॥
त्वत् पाद कमलादन्यन्न मे जन्मान्तरेष्वपि। निमित्तं कुशलस्यास्ति एवं गच्छामि सद्गतिम्॥५१॥
ज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमर्जितम्। जन्मान्तरेऽपि मे देव माभूदस्य परिक्षयः॥५२॥
दुर्गतावापि जातस्य त्वद्गतो मे मनोरथः। यदि नाथं न विन्देयं तावतास्मि कृती सदा॥५३॥
अकाम कलुषं चित्तं मम ते पादयोः स्थितम्। कामये विष्णु पादौ तु सर्व जन्मसु केवलम्॥५४॥
पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम्। आत्मज्ञानमिदं पुण्यं योग ज्ञानमिदं परम्॥५५॥
इत्येव मनया स्तुत्या स्तुत्वा देवं दिने दिने। किङ्करोऽस्मीति चात्मानं देवायैव निवेदयेत्॥५६॥
फलाहारो भवेन्मासं पश्यत्यात्मानमात्मनि। फलानि भुक्तोपसेवन् मासमद्भिश्च वर्तयेत्॥५७॥
अरण्य निवसेन्नित्यं जपन्नेतमृषिं सदा। त्रिस्त्रिषवण कालेषु स्नायादप्सु समाहितः॥५८॥
आदित्यमुपतिष्ठेन सूक्तेनानेन नित्यशः। आज्याहुतीरनेनैव हुत्वैतं चिन्तयेदृषिम्॥५९॥
ऊर्ध्वं मासात् फलाहारात् त्रिभिर्वर्षैर्जयेद्दिवम्। तद् भक्तस्तन्मनायुक्तो दशवर्षाण्यनन्यभाक्॥६०॥
साक्षात् पश्यति तं देवं नारायणमनामयम्। ग्राह्यमत्यन्त यत्नेन त्वष्टारं जगतोऽव्ययम्॥६१॥
गृहस्थ धर्मे वर्तेत न्याय वृत्तः समाहितः। एतदेवं चिन्तयेत नारायणमनामयम्॥६२॥
अति पातक संयुक्तं कालेन सुकृती भवेत्। येन येन च कामेन जपेदिमं ऋषिं सदा॥६३॥
स सकाम समृद्धः स्याच्छ्रद्दधानस्य कुर्वतः। होमं वाप्यथवा जाप्यमुपहारमथो चरुम्॥६४॥
कुर्वीत येन कामेन तत् सिद्धिमवधारयेत्। ज्ञाति श्रैष्ठ्यं महद्वित्तं यशो लोके परां गतिम्॥६५॥
पापेन विप्र मोक्षस्तु तत् सिद्धिमवधारयेत्। ज्ञान गम्यं परं सूक्ष्मं व्याप्य सर्वं व्यवस्थितम्॥६६॥
ग्राह्यमत्यन्त यत्नेन ब्रह्माभ्येति सनातनम्। सहस्रशीर्षेति सूक्तं सर्व काम फलप्रदम्॥६७॥
वेद गर्भ शरीरेण स वै नारायण स्मृतः। ब्रह्मेन्द्र रुद्र पर्जन्या अत्र सूक्ते व्यवस्थिताः॥६८॥
अत्रस्थमेतद् द्रष्टव्यं जगत् स्थावर जङ्गमम्। अतः सम्पठ्यमानोऽपि भक्तिं न परिहारयेत्॥६९॥
भक्तानुकम्पी भगवान् श्रयते पुरुषोत्तमः। पूजार्थं तस्य देवस्य वनात् स्वयमुदाहृतात्॥७०॥
आरण्यक विधानेन निर्वपेत् प्रत्यहं चरुम्। नारायणाय स्वाहेति मन्त्रान्ते जुहुयाद्धविः॥७१॥
आसहस्रात्ततश्चाक्षुर्दिव्यं होतुर्ददाति सः। अपि वा चरु साहस्रं तत्रेणैकेन निर्वपेत्॥७२॥
यावन्तो वापि शक्यन्ते अह्ना सर्वान् समापयेत्। सहस्रस्येप्सितानां च कामानां लभते फलम्॥७३॥
पुरुषायुः समायुक्तः सिद्धो वापि चरेन् महीम्॥७४।
एतत्तु यः पठति केवलमेव सूक्तं नारायणस्य चरणावभिवन्द्य नित्यम्।

पाठेन तेन परमेण सनातनस्य स्थानं जरा मरण वर्जितमेव विष्णोः॥७५॥
हविष्याग्नौ जले पुष्पैर्ध्यानेन हृदये हरिम्। यजन्ति सूरयो नित्यं जपेत रवि मण्डले॥७६॥
बिल्व पत्रं शमी पत्रं पत्रं भृङ्गारकस्य च। मालती कुश पद्मं च सद्यस्तुष्टिकरं हरेः॥७७॥
यत्रैतत् पठ्यते किञ्चित्तद् ध्यायेन् मनसैव तु। सम्पाद्य तत् प्रसादाच्च देवदेवस्य चक्रिणः॥७८॥
पत्रैश्च पुष्पैश्च फलैश्च दिव्यैरक्रीत लब्धैश्च सदैव सत्सु। भक्त्यैक लभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते तु यत्नः॥७९॥
इत्येवमुक्तः पुरुषस्य विष्णोरर्चा विधिर्विष्णु कुमार नाम्ना।
मुक्त्यैक मार्गं प्रतिबोधनाय दृष्ट्वा विधानं त्विह नारदोक्तम्॥८०॥

।इति।

पुत्रार्थे शालिबीजेन धनार्थे बिल्व पत्रकैः। दूर्वाभिरायुष्कामस्तु पुष्टिकामस्तु वेतसैः॥
कन्या कामस्तु लाजाभिः, पशुकामो घृतेन तु। विद्या कामस्तु पालाशैर्दशांशेन तु होमयेत्॥
धान्य कामो यवैश्चैव गुग्गुलेन रिपुक्षये॥ तिलैरारोग्य कामस्तु ब्रीहिभिः सुखमश्नुते॥ (तन्त्रसार)
पुत्रकामः पुरुष सूक्तेन तर्पणं मार्जनं च कृत्वा श्रीवैष्णवान् भोजयेदिति ग्रन्थ विस्तार भयादिकं न लिख्यते। अर्थानुसन्धान पुरस्सरम् भगवतो नारायणस्य षोडशर्चस्य पुरुष सूक्तस्य न्यासं पाठं पूजां होमं तर्पणं मार्जनं श्री वैष्णवाराधनं च कुर्वन् श्री वैष्णवः इह पुत्रादि सकल सौभाग्य निधानं परत्र परम सुख भाजनं भवतीति सर्वत्र सर्व मङ्गलम्।

।इति पुरुष सूक्त पुंश्चरणं सम्पूर्णम्।

## अथ पुरुष सूक्त माहात्म्यम्

तावावां परमे व्योम्नि पितरौ जगतः परौ। अनुग्रहाय लोकानां स्थितौ स्वः परया श्रिया॥१॥ (लक्ष्मी तन्त्र)
कदाचित् कृपयाविष्टौ जीवानां हित काम्यया। सुखिनः स्युरिमे जीवाः प्राप्नुयुर्नौ कथं त्विति॥२॥
उपायान्वेषणे यत्तौ परमेण समाधिना। मथ्नावस्त्वति गम्भीरं शब्द ब्रह्म महोदधिम्॥३॥
मथ्यमानात्ततस्तस्मात् सामग्र्यजुष सङ्कुलात्। तत्सूक्त मिथुनं दिव्यं दध्नो घृतमिवोत्थितम्॥४॥
इदं पुरुष सूक्तं हि सर्व वेदेषु पठ्यते। ऋतं सत्यञ्च विख्यातमृषि सिंहेन चिन्तितम्॥५॥ (व्यास)
ब्रह्म यज्ञ जपन् सूक्तं पुरुषं चिन्तयन् हरिम्। स सर्वान् जपते वेदान् साङ्गोपाङ्गान्विधानतः॥६॥ (विष्णुधर्मोत्तरपुराण)
वेदेषु पौरुषं सूक्तं पुराणेषु च वैष्णवम्। भारते भगवद् गीता धर्मशास्त्रेषु मानवम्॥७॥ (पद्म पुराण)
पौरुषं सूक्तमावर्त्यमुच्यते सर्व किल्बिषात्॥८॥ (यम स्मृति)
दद्यात् पुरुष सूक्तेन आपः पुष्पाणि चैव हि। अर्चितं स्यादिदं तेन विश्वं भुवन सप्तकम्॥९॥ (पाराशर स्मृति)
प्रति वेदं महाभाग यत् सूक्तं पौरुषं स्मृतम्। सर्व कर्मकरं पुण्यं पवित्रं पाप सूदनम्॥१०॥ (पुष्कर संहिता)
एकैकया ऋचा राम स्नातो दत्वा जलाञ्जलिम्। पौरुषेण च सूक्तेन मुच्यते सर्व किल्बिषात्॥११॥
अन्तर्जल गतो जप्त्वा तथा सूक्तं तु पौरुषम्। सर्व कल्मष निर्मुक्तो यथेष्टां लभते गतिम्॥१२॥
अकामः पौरुषं सूक्तं जप्त्वा नित्यमतन्द्रितः। नरो याति महाभाग तद् विष्णोः परमं पदम्॥१३॥
पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम्। आत्मज्ञानमिदं पुण्यं योग ज्ञानमिदं पदम्॥१४॥ (शौनक स्मृति)
धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं पूजयति स्म भक्त्या।
अर्घ्यादिभिः पौरुष सूक्त मन्त्रैः समाप्नुयाद् विष्णु पदं महात्मा॥ (महोपनिषद्)
पौरुषेणैव सूक्तेन ततो विष्णुं समर्चयेत्॥१६॥ (शाण्डिल्य स्मृति)
एषा वैष्णवी नाम संहितैतां प्रयुञ्जन् विष्णुं प्रीणाति॥१७॥ (ब्राह्मण)

## अथ मुद्गलोपनिषद्

श्रीमत् पुरुष सूक्तार्थं पूर्णानन्द कलेवरम्। पुरुषोत्तम विख्यातं पूर्णं ब्रह्म भवाम्यहम्॥

ॐ वाङ् मे मनसि प्रतिष्ठिता। मनो मे वाचि प्रतिष्ठितम्। आविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे। मा प्रहासीरनेनाधीतेनाहोरात्रात् सन्दधामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारमवतु वक्तारम्। हरिः ॐ शान्तिः शान्तिः शान्तिः।

ॐ पुरुष सूक्तार्थ निर्णयं व्याख्यास्यामः। पुरुष संहितायां पुरुष सूक्तार्थः संग्रहेण प्रोच्यते।

सहस्रशीर्षेत्यत्र स शब्दोऽनन्त वाचकः। अनन्त योजनं प्राह दशाङ्गुल वचस्तथा॥१॥

तस्य प्रथमया विष्णोर्देशतो व्याप्तिरीरिता। द्वितीयया चास्य विष्णोः कालतो व्याप्तिरुच्यते॥२॥

विष्णोर्मोक्षप्रदत्वं च कथितं तु तृतीयया। एतावानिति मन्त्रेण वैभवं कथितं हरेः॥३॥

एतेनैव च मन्त्रेण चतुर्व्यूहो विभाषितः। त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम्॥४॥

तस्माद् विराडित्यनया पाद नारायणाद् हरेः। प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता॥५॥

यत् पुरुषेणेत्यनया सृष्टि यज्ञः समीरितः। सप्तास्यासन् परिधयः समिधश्च समीरितः॥६॥

तं यज्ञमिति मन्त्रेण सृष्टि यज्ञः समीरितः। अनेनैव च मन्त्रेण मोक्षश्च समुदीरितः॥७॥

तस्मादिति च मन्त्रेण जगत् सृष्टिः समीरितः। वेदाहमिति मन्त्राभ्यां वैभवं कथितं हरेः॥८॥

यज्ञेनेत्युपसंहारः सृष्टेर्मोक्षस्य चेरितः। य एवमेतज्जानाति स हि मुक्तो भवेदिति॥९॥

(अध्याय १)

अथ तथा मुद्गलोपनिषदि पुरुष सूक्तस्य वैभवं विस्तरेण प्रतिपादितम्। वासुदेव इन्द्रायभगवज्ज्ञानमुपदिश्य पुनरपि सूक्ष्म श्रवणाय प्रणतायेन्द्राय परम रहस्यभूतं पुरुष सूक्ताभ्यां खण्ड द्वयाभ्यामुपदिशत्। खण्डावुच्येते। योऽयमुक्तः स पुरुषो नाम रूपज्ञानागोचरं संसारिणामति दुर्ज्ञेयं विषयं विहाय क्लेशादिभिः संक्लिष्ट देवादि जिहीर्षया सहस्र कलावयव कल्याणं दृष्ट मात्रेण मोक्षदं वेषमाददे। तेन वेषेण भूम्यादि लोकं व्याप्यानन्त योजनमत्यतिष्ठत्। पुरुषो नारायणो भूतं भव्यं भविष्यच्चासीत्। स एष सर्वेषां मोक्षदश्चासीत्। स च सर्वस्मान् महिम्नो ज्यायात्। तस्मान्न कोऽपि ज्यायान्। महापुरुष आत्मानं चतुर्धा कृत्वा त्रिपादेन परमे व्योम्नि चासीत्। इतरेण चतुर्थेनानिरुद्ध नारायणेन विश्वान्यासन्। स च पाद नारायणो जगत् स्रष्टुं प्रकृतिमजनयत्। स समृद्ध कायः सन् सृष्टि कर्म न जज्ञिवान्। सोऽनिरुद्ध नारायणस्तस्मै सृष्टिमुपादिशत्। ब्रह्मन् स्तवेन्द्रियाणि याजकानि ध्यात्वा कोशभूतं दृढं ग्रन्थि कलेवरं हविर्ध्यात्वा मां हविर्भुजं ध्यात्वा वसन्त कालमाज्यं ध्यात्वा ग्रीष्ममिध्मं ध्यात्वा शरदृतुं रसं ध्यात्वैव मग्नौ हुत्वाङ्ग स्पर्शात् कलेवरो वज्रं हीष्यते। ततः स्व कार्यान् सर्व प्राणि जीवान् सृष्ट्वा पश्चाद्याः प्रादुर्भविष्यन्ति। ततः स्थावर जङ्गमात्मकं जगद् भविष्यति। एतेन जीवात्मनोर्योगेन मोक्ष प्रकारश्च कथित इत्यनुसन्धेयम्। य इमं सृष्टि यज्ञं जानाति मोक्ष प्रकारं च सर्वमायुरेति॥२॥

एको देवो बहुधा निविष्ट अजायमानो बहुधा विजायते। तामेतमग्निरित्यध्वर्यव उपासते। यजूरित्येष हीदं सर्वं युनक्ति। सामेति छन्दोगाः। एतस्मिन् हीदं सर्वं प्रतिष्ठितम्। विषमिति सर्पाः। सर्प इति सर्पविदः। ऊर्गिति देवाः। रयिरिति मनुष्याः। मायेत्यसुराः। स्वधेति पितरः। देवजन इति देवजन विदः। रूपमिति गन्धर्वाः। गन्धर्व इत्यप्सरसः। तं यथा यथोपासते तथैव भवति। तस्माद् ब्राह्मणः पुरुष रूपं परं ब्रह्मैवाहमिति भावयेत्। तद्रूपो भवति य एवं वेद॥३॥

तद् ब्रह्म तापत्रयातीतं षट् कोष विनिर्मुक्तं षडूर्मि वर्जितं पञ्च कोशातीतं षड्भाव विकार शून्यमेवमादि सर्वं विलक्षणं भवति। तापत्रयं त्वाध्यात्मिकाधिभौतिकाधिदैविकं कर्तृ-कर्म कार्य ज्ञातृ ज्ञेय भोक्तृ भोग भोग्यमिति त्रिविधम्।

त्वङ् मांस शोणितास्थि स्नायु मज्जाः षट् कोशाः।

काम क्रोध लोभ मोह मद मात्सर्यमित्यरि षड्वर्गः।

अन्नमय प्राणमय मनोमय विज्ञानमयानन्दमया इति पञ्च कोशाः।

प्रियात्म जनन वर्धन परिणाम क्षय नाशाः षड्भावाः।

अशनाया पिपासा शोक मोह जरा मरणानीति षडूर्मयः।

कुल गोत्र जाति वर्णाश्रम रूपाणि षड्भ्रमाः।
एतद्योगेन परम पुरुषो जीवो भवति नान्यः। य एतदुपनिषदं नित्यमधीते सोऽग्निपूतो भवति। स वायु पूतो भवति। स आदित्य पूतो भवति। अरोगी भवति। श्रीमांश्च भवति। पुत्र पौत्रादिभिः समृद्धो भवति। विद्वांश्च भवति। महा पातकात् पूतो भवति। सुरा पानात् पूतो भवति। अगम्या गमनात् पूतो भवति। मातृ गमनात् पूतो भवति। दुहितृ स्नुषाभि गमनात् पूतो भवति। स्वर्ण स्तेयात् पूतो भवति। वेदि जन्म हानात् पूतो भवति। गुरोरशुश्रूषणात् पूतो भवति। अयाज्य याजनात् पूतो भवति। अभक्ष्य भक्षणात् पूतो भवति। उग्र प्रतिग्रहात् पूतो भवति। परदार गमनाद् पूतो भवति। काम क्रोध लोभ मोहेर्ष्यादिभिरबाधितो भवति। सर्वेभ्य पापेभ्यो मुक्तो भवति। इह जन्मनि पुरुषो भवति। तस्मादेतत् पुरुष सूक्तार्थमति रहस्यं राज गुह्यं देव गुह्यं गुह्यादपि गुह्यतरं नादीक्षितायोपदिशेत्। नानूचानाय। न बहु भाषिणे। नाप्रियवादिने। नासंवत्सर वेदिने। नातुष्टाय। नानधीत वेदायोपदिशेत्। गुरुरप्येवं विच्छुचौ देशे पुण्य नक्षत्रे प्राणानायम्य पुरुषं ध्यायन् उपसन्नाय शिष्याय दक्षिण कर्णे पुरुष सूक्तार्थमुपदिशेद्विद्वान्। न बहुशो वदेत्। यातयामो भवति। असकृत् कर्णमुपदिशेत्। एतत् कुर्वाणोऽध्येताध्यापकश्च इह जन्मनि पुरुषो भवतीत्युपनिषद्॥४॥ इति मुद्गलोपनिषत् समाप्ता।

**अथ चक्राब्ज मण्डल देवता पूजा विधिः**

(श्री रामानुजाचार्य परम्परायां विष्वक्सेनाचार्येण उपदिष्टः)

अथ श्री वैष्णवः शुचिः प्रयतः पीताम्बर-धरः श्री चूर्ण युक्त द्वादश श्वेतोर्ध्व-पुण्ड्र धरः तुलसी नलिनाक्ष माला धरः प्रधान वेद्यां श्वेत वस्त्रं प्रसार्य तत्र चक्राब्ज मण्डलमालिख्य तत्र स्थितानां देवानां षोडशोपचारैः पूजनं कुर्यात्।

प्राङ्मुखो यजमानः दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः। ॐ अच्युताय नमः। ॐ अनन्ताय नमः। ॐ गोविन्दाय नमः। इति मन्त्र त्रयेण दक्षिण हस्तेन पृथक् पृथक् त्रिराचम्य शुद्धोदकेन स्व दक्षिण हस्तं प्रक्षाल्यासून् संस्पृश्य प्राणानायम्य करे साक्षत पुष्प फल जल द्रव्याण्यादाय। हरिः ॐ तत्सत् गोविन्द गोविन्द गोविन्द अद्येत्यादि अस्यां शुभ पुण्य तिथौ अस्मिन् कर्मणि भगवदाज्ञया भगवत् कैङ्कर्यत्वेन प्रधान वेद्यां श्री चक्राब्ज मण्डले देवानां स्थापनं पूजनं च करिष्ये-इति सङ्कल्प्य।

लक्ष्मीनाथ समारम्भां नाथ यामुन मध्यमाम्। अस्मदाचार्य पर्यन्तां वन्दे गुरु परम्पराम्॥१॥
श्रीशं श्रीसैन्यनाथं वकुलधरमुनिं नाथ पङ्केरुहाक्षौ,
श्री रामं यामुनेयं वरमपि च महापूर्ण रामानुजाचार्यौ।
गोविन्दं भट्टवेदान्त्यथ वरकलिजिद्वंश दासांश्च कृष्णम्,
लोकार्य शैलनाथं वरवर मुनिमप्यहं चिन्तयामि॥२॥
इति गुरु परम्परामनुसन्धाय पुण्याह जलेन-
येन देवाः पवित्रेण आत्मानं पुनाते सदा। तेन सहस्रधारेण पावमान्यः पुवन्तु माम्।
इत्यात्मानं पूजा सामग्रीं च सम्प्रोक्ष्य दक्षिण हस्तेन पीताक्षतात् गृहीत्वा आवाहयेत्। तद् यथा-
यस्मिनृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिव सङ्कल्पमस्तु॥ (यजु, ३४/५)
मध्ये पीत कर्णिकायाम्-ॐ मन्त्राध्वने नमः-मन्त्राध्वानमावाहयामि-इति मन्त्राध्वानमावाह्य अर्घ्य पाद्याचमन स्नान वस्त्रोपवीत गन्ध पुष्प धूप दीप नैवेद्याचमन ताम्बूल पूगीफल दक्षिणा नमस्कारैः पूजयेत्॥१॥
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः।
अहेडमानो वरुणेह बोध्यरुशंस मा न आयुः प्र मोषीः॥ (यजु, १८/४९, २१/२)
ॐ तत्त्वाध्वने नमः-तत्त्वाध्वानमावाहयामि-इत्यरुण केशरेषु तत्त्वाध्वानमावाह्य सर्वोपचारैः पूजयेत्॥२॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।

तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय। (श्वेताश्वतर उपनिषद्, ३/७)

दलेषु-ॐ वर्णाध्वने नमः वर्णाध्वानमावाहयामि-इति वर्णाध्वानमावाह्य समर्चयेत्॥३॥

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन्।

(ऋक्, १/२२/१८, साम, १६७०, वाज.यजु, ३४/४३, तैत्तिरीय ब्राह्मण, २/४/६/१)

नाभौ-ॐ पदाध्वने नमः पदाध्वनमावाहयामि-इति पदाध्वनमावाह्य प्रणमेत्॥४॥

येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम्।

येन यज्ञास्तायते सप्तहोता तन्मे मनः शिव सङ्कल्पमस्तु॥ (वाज. यजु. ३४/४)

अरुणारेषु- ॐ कालाध्वने नमः कालाध्वनमावाहयामि इति कालाध्वनमावाह्य सर्वोपचारैः पूजयेत्॥५॥

प्र तद् विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।

यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा॥

(वाज. यजु. ५/२०, ऋक्, १/१५४/२, अथर्व, ७/२६/२-३, तैत्तिरीय ब्राह्मण्, २/४/३/४, निरुक्त, १/२०)

नेमौ-ॐ भुवनाध्वने नमः भुवनाध्वानमावाहयामि इति भुवनाध्वानमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥६॥

ततः कर्णिकास्थ शुक्लाष्टविन्दुषु नारायणाष्टाक्षरमन्त्राक्षराणि पूजयेत्। तद्यथा-

सहस्रशीर्षं देवं सहस्राक्षं विश्व शम्भुवम् (सम्भवम्)।

विश्वतः परमं नित्यं विश्वं नारायणं हरिम्। (महोपनिषद्, १/५, चतुर्वेदोपनिषद्, २)

इति मन्त्रेण पूर्वे प्रथम विन्दौ-ॐ ज्ञानस्वरूप कुमुद पाण्डर वर्णाय नमः, ज्ञान स्वरूप कुमुद पाण्डरमावाह्य-इति ॐकारमावाह्य सर्वोपचारैः मूल मन्त्रप्रथमाक्षरं पूजयेत्॥७॥

न हि तेषाममा चन नाध्वसु वारणेषु। ईशे रिपुरघशंसः॥ (यजु, ३/३२)

अग्निकोणे द्वितीय विन्दौ-नकाराय नमः- नकारमैश्वर्य स्वरूपं पद्मरागाचलाकारम् आवाहयामि- इति मूलमन्त्र द्वितीयाक्षरं नकारमावाह्य सम्यगर्चयेत्॥८॥

मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः।

महश्चिदस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः॥ (वाज. यजु, ३/४६)

दक्षिणे तृतीय विन्दौ- मोकाराय नमः-मोकारं शक्ति स्वरूपमञ्जनाचलनिभमावाहयाम्-इति मूलमन्त्र तृतीयाक्षरं मोकारमावाह्य पूजयेत्॥९॥

नाना हि वान्देवहितं सदस्कृतं मा संसृक्षाथां परमे व्योमन्।

सुरा त्वमसि शुष्मिणी सोम एष मा मा हिंसीः स्वां योनिमाविशन्ती।(वाज. यजु, १९/७)

नैर्ऋत्य कोणे चतुर्थ विन्दौ -नाकाराय नमः-नाकारं बल स्वरूपं काञ्चनाचलनिभमावाहयामि-इति मूलमन्त्र चतुर्थाक्षरम् नाकारमावाह्य षोडशोपचारैः पूजयेत्॥१०॥

राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः। तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनिर्ऋतायुभ्यां त्वा। (ऋक्, ४/४२/१०, यजु, ७/१०)

पश्चिमे पञ्चम विन्दौ - राकाराय नमः- राकारं तेजोरूपं निर्धूमाङ्गार सदृशमावाहयामि- इति मूलमन्त्र पञ्चाक्षरं राकारमावाह्य सर्वोपचारैः पूजयेत्॥११॥

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः।

यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम॥

(ऋक्, १०/१२१/२, अथर्व, ४/२/१, १३/३/२४, यजु, २५/१३)

वायव्य कोणे षष्ठ विन्दौ-यकाराय नमः- यकारं वीर्यस्वरूपमयस्कान्त सदृश मावाहयामि इति मूलमन्त्र षष्टाक्षरमावाह्य सम्यगर्चयेत्॥१२॥
प्रैतु वाजी कनिक्रन्नानदद्रासभः पत्वा। भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा। वृषाग्निं वृषणं भरन्नपां गर्भं समुद्रियम्। अग्न आयाहि वीतये। (यजु, ११/४६॥
उत्तरे सप्तविन्दौ-णाकाराय नमः -णाकारं बलस्वरूपमावाहयामि - इति मूलमन्त्र सप्तमाक्षरं णाकारमावाह्य सर्वोपचारैः पूजयेत्॥१३॥
यः प्राणदो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम।
(ऋक्, १०/१२१/३, यजु, २३/३, २५/११, तैत्तिरीय संहिता, ४/१/८/४, ७/५/१६/१, अथर्व, ४/२/२)
ईशान कोणे अष्टम विन्दौ-यकाराय नमः-यकारं वीर्य्यस्वरूपमयस्कान्त सदृशमावाहयामि-इति- नारायण मन्त्राष्टमाक्षरं यकारमावाह्य पूर्वोक्त रीत्या षोडशोपचारैः सम्पूज्य प्रणमेत्॥१४॥
ततोऽरुण केशरेषु पूर्वादि क्रमेण पूजयेत्। तद्यथा-
मनसः काममाकूतिं वाचः सत्यमशीय। पशूनां रूप मन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा॥ (वाज. यजु, ३९/४)
ॐ श्रीं श्रियै नमः- श्रियमावाहयामि-इति पूर्व दलीय केशरेषु श्रियमावाह्य सर्वोपचारैः पूजयेत्॥१५॥
आर्द्रां पुः (यः) करिणीं पु (य) ष्टिं सुवर्णां हेममालिनीम्।
सूर्या हिरण्मयीं लक्ष्मीं जातवेदो म आवह॥ (श्री सूक्त, १४)
ॐ पुं पुष्ट्यै नमः- पुष्टिमावाहयामि- इति अग्नि कोण दलीय केशरेषु सरस्वतीमावाह्य पूर्वोक्तरीत्या सर्वोपचारैः पूजयेत्॥१७॥
रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे कुयवं च मेऽक्षितं च मेऽन्नं च मे क्षुच्च मे यज्ञेन कल्पन्ताम्॥ (यजु, १८/१०)
ॐ प्रीं प्रीत्यै नमः प्रीतिमावाहयामि- इति नैर्ऋत्य कोण दलीय केशरेषु प्रीतिमावाह्य षोडशोपचारैः पूजयेत्॥१८॥
द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि॥ (वाज. यजु, ३६/१७)
ॐ शां शान्त्यै नमः शान्तिमावाहयामि-इति- पश्चिम दलीय केशरेषु शान्तिमावाह्य सर्वोपचारैः पूजयेत्॥१९॥
अङ्गान्यात्मन् भिषजा तदश्विनात्मानमङ्गैः समधात्सरस्वती।
इन्द्रस्य रूपं शत मानमायुश्चन्द्रेण ज्योतिरमृतं दधानाः। (वाज. यजु, १९/९३)
ॐ तुं तुष्ट्यै नमः तुष्टिमावाहयामि-इति वायव्य कोण दलीय केशरेषु तुष्टिमावाह्य सम्यगर्चयेत्।२०॥
यत् प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिव सङ्कल्पमस्तु॥ (यजु, ३४/३)
ॐ क्लीं कान्त्यै नमः कान्तिमावाहयामि-इत्युत्तर दलीय केशरेषु कान्तिमावाह्य सर्वोपचारैः सम्पूज्य प्रणमेत्॥२१॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽसि (सु) राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे। (श्री सूक्त, ७)
ॐ क्लीं कीर्त्यै नमः कीर्तिमावाहयामि-इतीशान कोण दलीय केशरेषु कीर्तिमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥२२॥
ततः सर्व दलेषु पूर्वादि क्रमेण पूजयेत्। तद्यथा-
महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि। तन्नो लक्ष्मी प्रचोदयात्॥ (लक्ष्मी सूक्त, ९)
ॐ महालक्ष्म्यै नमः महालक्ष्मीमावाहयामि -इति पूर्वे प्रथम दले महालक्ष्मीमावाह्य सर्वोपचारैः पूजयेत्॥२३॥
श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।
इष्णनिषाणमुं म इषाण सर्वलोकं म इषाण। (यजु, ३१/२२)

ॐ विद्यालक्ष्म्यै नमः विद्यालक्ष्मीमावाहयामि-इत्यग्नि कोणे द्वितीय दले विद्यालक्ष्मीमावाह्य पूजोपचारैः समर्चयेत्॥२४॥
हिरण्यवर्णां हरिणीं सुवर्ण रजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह॥ (श्रीसूक्त, १)
ॐ सौभाग्यलक्ष्म्यै नमः सौभाग्यलक्ष्मीमावाहयामि -इति दक्षिणे तृतीय दले सौभाग्यलक्ष्मीमावाह्य पूर्वोक्तोपचारैः पूजयेत्॥२५॥
पद्मानने पद्म ऊरू पद्माक्षि पद्मसम्भवे। तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम्॥ (श्रीसूक्त, १८)
ॐ अमृतलक्ष्म्यै नमः अमृतलक्ष्मीमावाहयामि-इति नैर्ऋत्य कोणे चतुर्थ दले अमृतलक्ष्मीमावाह्य सर्वोपचारैः पूजयेत्॥२६॥
अश्वदायी गोदायी धनदायि महाधने। धनं मे जुषतां देवि सर्वकामांश्च देहि मे॥ (श्रीसूक्त, १९)
ॐ कामलक्ष्म्यै नमः कामलक्ष्मीमावाहयामि-इति पश्चिमे पञ्चम दले कामलक्ष्मीमावाह्य षोडशोपचारैः पूजयेत्॥२७॥
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम्। विष्णुप्रियां (लक्ष्मीप्रिय) सखी देवीं नमाम्यच्युतवल्लभाम्। (श्रीसूक्त, २५)
ॐ सत्यलक्ष्म्यै नमः सत्यलक्ष्मीमावाहयामि-इति वायव्य कोणे षष्ठ दले सत्यलक्ष्मीमावाह्य सर्वोपचारैः समर्चयेत्॥२८॥
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्य हिरण्यं विन्देयं गामश्वं पुरुषानहम्। (श्रीसूक्त, २)
ॐ भोगलक्ष्म्यै नमः भोगलक्ष्मीमावाहयामि-इत्युत्तरे सप्तम दले भोगलक्ष्मीमावाह्य पुष्पादिभिः समर्चयेत्॥२९॥
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्य हिरण्यं प्रभूतं गावो दास्योऽश्वाविन्देयं पुरुषानहम्। (श्रीसूक्त, १५)
ॐ योगलक्ष्म्यै नमः योगलक्ष्मीमावाहयामि-इतीशान कोणे अष्टम दले योगलक्ष्मीमावाह्य पूर्वोक्त रीत्या षोडशोपचारैः सम्पूज्य प्रणमेत्॥३०॥
ततः कृष्ण दल सन्धिषु पूर्वादि क्रमेण हरेर्भूषणायुधानि पूजयेत्। तद्यथा-
आ ते वत्सो मनो यमत्परमाच्चित्सधस्तात्। अग्ने त्वां कामया गिरा। (यजु, १२/११५)
पूर्वे ॐ श्रीवत्साय श्रीनिवासाय नमः श्रीवत्समावाहयामि-इति श्रीवत्समावाह्य सर्वोपचारैः पूजयेत्॥३१॥
परिवाज पतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे। (यजु, ११/२५)
आग्नेय्याम् ॐ श्रीकौस्तुभाय रत्नाधिपतये नमः श्री कौस्तुभमावाहयामि -इति श्री कौस्तुभमाबाह्य पुष्पादिभिः समर्चयेत्॥३२॥
कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयं संघातं संघातं जेष्म वर्ष वृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु परापूतं रक्षः परापूता। आरातयो ऽपहतं रक्षो वायुर्वो विविनक्तु देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना। (यजु, १/१६)
दक्षिणे ॐ किरीटाय मुकुटाधिपतये नमः किरीटमावाहयामि-इति किरीटमावाह्य पूजोपचारैः सम्पूजयेत्॥३३॥
इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः।
देवसेनानामभिभञ्ज ती नां जयन्तीनां मरुतो यन्त्वग्रम्॥ (यजु, १७/४०)
नैर्ऋत्याम्-ॐ वैजयन्त्यै वनमालायै नमः वैजयन्तीमावाहयामि -इति वैजयन्तीमावाह्य सर्वोपचारैः समर्चयेत्॥३४॥
चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि।
तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम॥
(त्रिपाद्विभूति महानारायणोपनिषद्, ७/३, महानारायणोपनिषद्, ५/१०, सुदर्शन उपनिषद्, ५)
पश्चिमे ॐ सुदर्शनाय हेतिराजाय नमः सुदर्शनमावाहयामि -इति सु दर्शनमावाह्य षोडशोपचारैः पूजयेत्॥३५॥
अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयम्। उपयाम गृहीतोऽस्यग्नये त्वा वर्चस एषते योनिरग्नये त्वा वर्चसे। (यजु, २६/९)
वा यव्याम् ॐ पाञ्चजनाय शङ्खाधिपतये नमः पाञ्चजन्यमावाहयामि-इति पाञ्चजन्यमावाह्य पुष्पादिभिः समर्चयेत्॥३६॥
जिह्वा मे भद्रं वाङ् महो मनो मन्युः स्वराड् भामः। मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः॥ (यजु, २०/६)

उत्तरे ॐ कौमोदक्यै गदाधिपतये नमः कौमोदकीमावाहयामि -इति कौमोदकीमावाह्य पूर्वोक्त रीत्या पूजयेत्॥३७॥
सौरी बलाका शार्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यै शारिः पुरुषवाक् श्वाविद् भौमी शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शुकः पुरुषवाक्॥ (यजु, २४/३३)
ईशान्याम् ॐ शार्ङ्गाय चापाधिपतये नमः शार्ङ्गमावाहयामि-इति शाएङ्गमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥३८॥
ततः शुक्ल प्रथम नाभौ-
इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूळ्हमस्य पांसुरे। स्वाहा (यजु, ५/१५)
ॐ विष्णवे नमः विष्णुमावाहयामि-इति विष्णुमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥३९॥
पीत द्वितीय नाभौ-
ब्रह्म जज्ञानं प्रथमं पुरस्ता द्विसीमतः सुरुचो वेन आवः। स बुध्न्या उपमाऽअस्यविष्ठाः सतश्च योनिमसश्च वि वः। (यजु, १३/३)
ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि -इति ब्रह्माणमावाह्य सर्वोपचारैः पूजयेत्॥४०॥
पाटल तृतीय नाभौ-
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय मामृतात् (यजु, ३/६०)
ॐ त्र्यम्बकाय नमः त्र्यम्बकमावाहयामि -इति त्र्यम्बकमावाह्य षोडशोपचारैः पूजयेत्॥४१॥
ततोऽरुण द्वादशारेषु पूर्वादि क्रमेण केशवादि द्वादश मूर्तीन् पूजयेत्। तद्यथा-
युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा। अथा न इन्द्र सोमपा गिरामुपश्रुती चर। उपयाम गृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने। (यजु, ८/३४)
ॐ केशवाय नमः केशवमावाहयामि -इति प्रथमारे केशवमावाह्य सर्वोपचारैः पूजयेत्॥४२॥
नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्। (तैत्तिरीय आरण्यक,१०/१५)
ॐ नारायणाय नमः नारायणमावाहयामि -इति द्वितीयारे नारायणमावाह्य पूजोपचारैः समर्चयेत्॥४३॥
मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा नभसे स्वाहा नभस्याय स्वाहेषाय स्वाहोर्जाय स्वाहा सहसे स्वाहा सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहा अंहस्पतये स्वाहा। (यजु, २२/३१)
ॐ माधवाय नमः माधवमावाहयामि -इति तृतीयारे माधवमावाह्य पुष्पादिभिः पूजयेत्॥४४॥
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा। इमं सजाता अनु वीरयध्वमिन्द्रं सखायो अनु सं रभध्वम्। (यजु, १७/३८)
ॐ गोविन्दाय नमः गोविन्दमावाहयामि-इति चतुथरि गोविन्दमावाह्य पुष्पादिभिः पूजयेत्॥४५॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा।
(ऋक्, १/२२/१९, वाज. यजु, /४, १३/३३, तैत्तिरीय संहिता, १/३/६/२, अथर्व, ७/२६/६)
ॐ विष्णवे नमः विष्णुमावाहयामि-इति पञ्चमारे विष्णुमावाह्य सर्वोपचारैः पूजयेत्॥४६॥
मधु वाता ऋतायते मधु क्षरन्ति सिन्धव। माध्वीर्नः सन्त्वोषधीः॥
(ऋक्, १/९०/६, यजु, १३/२७, तैत्तिरीय संहिता, ४/२/९/३, तैत्तिरीय आरण्यक, १०/१०/२, शतपथ ब्राह्मण, १४/९/३/११)
ॐ मधुसूदनाय नमः मधुसूदनमावाहयामि -इति षष्ठारे मधुसूदनमावाह्य पूर्वोक्त रीत्या समर्चयेत्॥४७॥
दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मो ऽन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण चन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽस्मादन्नदस्यै प्रतिष्ठाया अगन्म स्वः संज्योतिषा भूम। (यजु, २/२५)
ॐ त्रिविक्रमाय नमः त्रिविक्रममावाहयामि-इति सप्तमारे त्रिविक्रममावाह्य सर्वोपचारैः पूजयेत्॥४८॥

नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्न्याय च प्रथमाय च। (यजु, १६/३०)

ॐ वामनाय नमः वामनमावाहयामि-इति अष्टमारे वामनमावाह्य पुष्पादिभिः समर्चयेत्।४९॥

दैव्याय धर्त्रे जोष्ट्रे देवश्रीः श्रीमनाः शतपयाः। परिगृह्य देवा यज्ञमायन् देवा देवेभ्यो अध्वर्यन्तो अस्थुः। (यजु, १७/५६)

ॐ श्रीधराय नमः श्रीधरमावाहयामि-इति नवमारे श्रीधरमावाह्य सर्वोपचारैः पूजयेत्॥५०॥

पुरुष मृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वनस्पतीनां कृकवाकुः सावित्रो हंसो वातस्य नाक्रो मकर कुलीपयस्ते ऽकूपारस्य ह्रियै शल्यकः। (यजु, २४/३५)

ॐ हृषीकेशाय नमः हृषीकेशमावाहयामि -इति दशमारे हृषीकेशमावाह्य पूर्वोक्त रीत्या समर्चयेत्॥५१॥

नाभिर्मे चित्तं विज्ञानं पायुर्मे ऽपचितिर्भसत्। आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः। जङ्घाभ्यां पद्भ्यां घर्मोऽसि विशि राजा प्रतिष्ठितः। (यजु, २०/९)

ॐ पद्मनाभाय नमः पद्मनाभमावाहयामि -इति एकादशारे पद्मनाभमावाह्य सर्वोपचारैः पूजयेत्॥५२॥

यद्वाजिनो दाम सन्दामर्वतो या शीर्षण्या रशना रज्जुरस्य। यद्वा घास्य प्रभृतमास्ये तृणं सर्वा ता ते अपि देवेष्वस्तु॥

(ऋक्, १/१६२/८, यजु, २५/३१, तैत्तिरीय संहिता, ४/६/८/३)

ॐ दामोदराय नमः दामोदरमावाहयामि-इति द्वादशारे दामोदरमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥५३॥

ततः कृष्ण द्वादशार सन्धिषु पूर्वादि क्रमेण मत्स्यं कूर्मं वराहं नृसिंहं वामनं परशुरामं रामं तद् भ्रातॄन् कृष्णं सभ्रातरं कल्किनञ्च पूजयेत्। तद्यथा-

हंशः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसद् ऋतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं (बृहत्)॥

(ऋक्, ४/४०/५, यजु, १०/२४, १२/१४, तैत्तिरीय संहिता, १/८/१५/२, तैत्तिरीय आरण्यक, १०/१०/२)

ॐ मत्स्याय नमः मत्स्यमावाहयामि -इति प्रथमार सन्धौ मत्स्यमावाह्य षोडशोपचारैः समर्चयेत्॥५५॥

खड्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिंहो मारुतः कृकलासः पिप्पकाशकुनिस्तेरव्यायै विश्वेषां देवानां पृषतः॥ (यजु, २४/४०)

ॐ वराहाय नमः वराहमावाहयामि -इति वराहमावाह्य पूर्वोक्त रीत्या पूजयेत्॥५६॥

प्र तद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षयन्ति भुवनानि विश्वा॥ (यजु, ५/२०)

ॐ नृसिंहाय नमः नृसिंहमावाहयामि -इति चतुर्थ सन्धौ नृसिंहमावाह्य पुष्पादिभिः समर्चयेत्॥५७॥

नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे। नमो वृद्धाय च सवृधे च नमोऽग्न्याय च प्रथमाय च। (यजु, १६/३०)

ॐ वामनाय नमः वामनमावाहयामि-इति पञ्चमार सन्धौ वामनमावाह्य पूजयेत्॥५८॥

अपिबत कद्रुवः सुतमिन्द्रः सहस्रबाह्वे। अत्रादेदिष्ट पौंस्यम्। (ऋक्, ८/४५/२६, साम, १३१)

ॐ परशुरामाय नमः परशुराममावाहयामि -इति षष्ठार सन्धौ परशुराममावाह्य पुष्पादिभिः पूजयेत्॥५९॥

भद्रो भद्रया सचमान आगात् स्वसारं जारो अभ्येति पश्चात्।

सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन् रुशद्भिर्वर्णैरभि राममस्थात्॥ (ऋक्, १०/३/३, साम, १५४८)

ॐ रामाय नमः राममावाहयामि -इति सप्तमार सन्धौ राममावाह्य षोडशोपचारैः पूजयेत्॥६०॥

विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि। विष्णोर्ध्रुवोऽसि। वैष्णवमसि विष्णवे त्वा॥ (यजु, ५/२१)

ॐ लक्ष्मणाय नमः लक्ष्मणमावाहयामि-इत्यष्टमारसन्धौ लक्ष्मणमावाह्य सर्वोपचारैः पूजयेत्॥६१॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्॥

(ऋक्, १/२२/२०, साम, १६७२, अथर्व, ७/२६/७, यजु, ६/५, तैत्तिरीय संहिता, १/३/६/२, ४/२/९/३)

ॐ भरताय नमः भरत्मावाहयामि-इति नवमारसन्धौ भरतमावाह्य पूजोपचारैः समर्चयेत्॥६२॥

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा॥
(ऋक्, १/२२/१९, साम, १६७१, यजु, ६/४, १३/३३, तैत्तिरीय संहिता, १/३/६/२)
ॐ शत्रुघ्नाय नमः शत्रुघ्नमावाहयामि-इति दशमारसन्धौ शत्रुघ्नमावाह्य पूजयेत्॥६३॥
कृष्णं त एम रुशतः पुरो भाश्चरिष्ण्वर्चिर्वपुषामिदेकम्। यद प्रवीता दधते ह गर्भं सद्यश्चिज्जातो भवसीदु दूतः॥ (ऋक्, ४/७/९)
ॐ सभ्रात्रे कृष्णाय नमः सभ्रातरं कृष्णमावाहयामि-इत्येकादशारसन्धौ सभ्रातरं कृष्णमावाह्य सर्वोपचारैः पूजयेत्॥६४॥
रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादश॥ (ऋक्, ६/४७/१८)
ॐ कल्किने नमः कल्किमावाहयामि-इति द्वादशारसन्धौ कल्किनमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥६५॥
ततः प्रथम नेमि वलये पूर्वादि क्रमेण शङ्खं चक्रं गदां शार्ङ्गं मुसलं बाणं पाशं च पूजयेत्। तद्यथा-
अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः तमीमहे महागयम्। (यजु, २६/९)
ॐ पाञ्चजन्याय शङ्खाधिपतये नमः पाञ्चजन्य शङ्खमावाहयामि-इति पूर्वे पाञ्चजन्य शङ्खमावाह्य सर्वोपचारैः पूजयेत्॥६६॥
चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पूता अति पाप्मानमरातिं तरेम॥
(त्रिपाद्विभूति महानारायण उपनिषद्, ७/३)
ॐ सुदर्शनाय हेतिराजाय नमः सुदर्शनमावाहयामि -इत्यग्निकोणे चक्रमावाह्य समर्चयेत्॥६७॥
भीमानीते आयुधा तिग्मानि धूर्वणे॥ (ऋक्, ८/२९/५, ८/९६/९)
ॐ कौमोदक्यै गदाधिपतये नमः। कौमोदकी गदामावाहयामि-इति दक्षिणे कौमोदकी गदामावाह्य पूजयेत्॥६८॥
ये तीर्थानि प्रचरन्ति सृका हस्ता निषङ्गिणः। तेषां सहस्र योजनेऽव धन्वानि तन्मनसि॥ (यजु, १६/६१)
ॐ नन्दकाय खड्गाधिपतये नमः नन्दक खड्गमावाहयामि -इति नैर्ऋत्ये नन्दक खड्गमावाह्य समर्चयेत्॥६९॥
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परि भुज॥(यजु, १६/११)
ॐ शार्ङ्गाय चापाधिपतये नमः शार्ङ्गधनुरावाहयामि -इति पश्चिमे शार्ङ्गधनुरावाह्य पूजयेत्॥७०॥
नमस्त आयुधायानातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने॥ (यजु, १६/१४)
ॐ मुसलाय नमः मुसलमावाहयामि-इति वायव्ये मुसलमावाह्य समर्चयेत्॥७१॥
विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ उत। अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः॥ (यजु, १६/१०)
ॐ बाणाय नमः बाणमावाहयामि -इत्युत्तरे बाणमावाह्य पूजयेत्॥७२॥
ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः।
तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः॥
(कौषीतकि श्रौत सूत्र, २५/१/१११, आपस्तम्ब श्रौत सूत्र, ३/१३/१, कौशिक सूत्र, ७/८, पारस्कर गृह्य सूत्र, १/२/८)
ॐ पाशाय नमः पाशमावाहयामि-इतीशान कोणे पाशमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥७३॥
ततः पीठस्य चतुष्कोणेषु आग्नेयादि क्रमे वराहं नृसिंहं अनन्तं हयग्रीवं चेति चतुर्मूर्तीः पूजयेत्। तद्यथा-
प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति।
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन्॥
(ऋक्, ९/९७/७, सामवेद, ५२४, १११६)
पीठाग्नि कोणे-ॐ वराहाय धरणीधराय नमः वराहमावाहयामि-इति वराहमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥७४॥
प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।

यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा॥
(ऋक्. १/१५४/२, अथर्व, ७/२६/२-३, तैत्तिरीय ब्राह्मण, २/४/३/४, यजु, ५/२०)
पीठ नैर्ऋत्य कोणे-ॐ नृसिंहाय वज्रनखाय नमः नृसिंहमावाहयामि-इति नृसिंहमावाह्य सर्वोपचारैः सम्पूज्य प्रणमेत्॥७५॥
वि चक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन्।
ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार॥
(ऋक्, ७/१००/४, तैत्तिरीय ब्राह्मण, २/४/३/५)
पीठ वायव्य कोणे-ॐ अनन्ताय नागराजाय सहस्रफणाशोभिताय नमः अनन्तमावाहयामि-इत्यनन्तमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥७६॥
हयो न विद्वाँ अयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवम्।
नास्या वश्मि विमुचं नावृतं पुनर्विद्वान् पथः पुर एत ऋजुनेषति॥ (ऋक्, ५/४६/१)
पीठेशान कोणे-ॐ हयग्रीवाय सर्वविद्याधराय नमः हयग्रीवमावाहयामि-इति हयग्रीवमावाह्य सर्वोपचारैः सम्पूज्य प्रनमेत्॥७७॥
ततः शुक्ल वीथ्यां पूर्वादि क्रमेण इन्द्राग्नि-यम-निर्ऋति-वरुण-सोमेशानान् क्रमेण पूजयेत्। तद्यथा-
त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम्।
ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः॥
(ऋक्, ६/४७/११, साम, ३३३, अथर्व, ७/८६/१, यजु, २०/५०, तैत्तिरीय संहिता, १/६/१२/५)
पूर्वे-ॐ इन्द्राय देवराजाय नमः इन्द्रमावाहयामि-इतीन्द्रमावाह्य अर्घ्य-पाद्या-चमन-स्नान-वस्त्रो-पवीत-गन्ध-पुष्प-धूप-दीप नैवेद्य दक्षिणादिभिः सम्पूज्य प्रणमेत्॥७८॥
त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अव यासिसीष्ठाः।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत्॥ (यजु, २१/३)
अग्नि कोणे-ॐ अग्नये तेजोऽधिपतये नमः अग्निमावाहयामि-इत्यग्निमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥७९॥
यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा। स्वाहा धर्माय स्वाहा धर्मः पित्रे॥ (यजु, ३८/९)
दक्षिणे-ॐ यमाय प्रेतराजाय नमः यममावाहयामि-इति यममावाह्य सर्वोपचारैः समर्चयेत्॥८०॥
असुन्वन्तमयजमानमिच्छ स्तेनस्येत्या मन्विहि तस्कराय। अन्यमस्मदिच्छ सा त इत्या नमो देवि र्नृते तुभ्यमस्तु॥ (यजु, १२/६२)
नैर्ऋत्य कोणे-ॐ निर्ऋतये भूताधिपतये नमः निर्ऋतिनावाहयामि-इति निर्ऋतिमावाह्य पूर्वोक्त रीत्या पूजयेत्॥८१॥
वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भ सर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद॥ (यजु. ४/३६)
पश्चिमे-ॐ वरुणाय जलाधिपतये नमः वरुणमावाहयामि-इति वरुणमावाह्य सर्वोपचारैः पूजयेत्॥८२॥
आ नो नियुद्भिः सतिनीभिरध्वरं सहस्रिणीभीरुपयाहि यज्ञम्। वायो अस्मिन्त्स्वने मादयस्व यूयं पात स्वस्तिभिः सदा नः॥ (यजु, २७/२८)
वायव्य कोणे-ॐ वायवे प्राणाधिपतये नमः वायुमावाहयामि-इति वायुमावाह्य षोडशोपचारैः समर्चयेत्॥८३॥
सोमो धेनुं सोमो अर्वन्तमाशुं वीरं कर्मण्यं ददाति। सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशस्मै॥ (यजु, ३४/२१)
उत्तरे-ॐ सोमाय पीयूषाधिपतये नमः सोममावाहयामि-इति सोममावाह्य सर्वोपचारैः पूजयेत्॥८४॥
तमीशानं जगतस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ (यजु, २५/१८)

ईशान कोणे-ॐ ईशानाय विद्याधिपतये नमः ईशानमावाहयामि-इतीशानमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥८५॥
ततः चतुद्वरिषु चण्ड प्रचण्डौ पूर्वद्वारे, भद्र सुभद्रौ दक्षिण द्वारे, जय विजयौ पश्चिम द्वारे, धातृ विधातारौ उत्तर द्वारे पूजयेत्। तद्यथा-
आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्।
संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः॥
(ऋक्, १०/१०३/१, साम, १८४९, अथर्व, १९/१३/२, वाज. यजु, १७/३३, तैत्तिरीय संहिता, ४/६/४/१)
श्वेत पूर्व द्वारे-ॐ चण्डाय नमः चण्डमावाहयामि -इति चण्डमावाह्य सर्वोपचारैः पूजयेत्॥८६॥
पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम्।
स नोरासच्छुरुधश्चन्द्राग्रा धियं धियं सीषधाति प्र पूषा॥
(ऋक्, ६/४९/८, यजु, ३४/४२, तैत्तिरीय संहिता, १/१/१४/२)
ॐ प्रचण्डाय नमः प्रचण्डमावाहयामि-इति द्वितीयं प्रचण्डमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥८७॥
भद्रं कर्णेभिः श्रृणुयाम देवा भद्रं पश्ये माक्षभिर्यजत्राः।
स्तिरङ्गै स्तुष्टुवांसस्तनू भिर्व्यशेम देवहितं यदायुः॥
अरुण दक्षिण द्वारे-ॐ भद्राय नमः भद्रमावाहयामि-इति प्रथमं भद्रमावाह्य सर्वोपचारैः पूजयेत्॥८८॥
भद्रं भद्रं न आभरेषमूर्जं शतक्रतो। यदिन्द्र मृळयासि नः। (ऋक्, ८/९३/२८, साम, १७३)
ॐ सुभद्राय नमः सुभद्रमावाहयामि -इति सुभद्रमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥८९॥
संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना।
तदिन्द्रेण जयत तत्सहध्वं युधो नर इषु हस्तेन वृष्णा॥ (यजु, १७/३४)
पीत पश्चिम द्वारे-ॐ जयाय नमः जयमावाहयामि-इति प्रथमं जयमावाह्य सर्वोपचारैः समर्चयेत्॥९०॥
विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ उत। अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः॥
ॐ विजयाय नमः विजयमावाहयामि-इति विजयमाह्वाय षोडशोपचारैः सम्पूज्य प्रणमेत्॥९१॥
धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपा देवो अग्निः।
त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधात स्वाहा॥ (वाज यजु, ८/१७)
कृष्णोत्तर द्वारे-ॐ धात्रे नमः धातारमावाहयामि-इति प्रथमं धातारमावाह्य सर्वोपचारैः पूजयेत्॥९२॥
स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा।
यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त॥ (यजु, ३२/१०)
ॐ विधात्रे नमः विधातारमावाहयामि-इति द्वितीयं विधातारमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥९३॥
ततो वीथ्या ईशानादि कोणेषु प्रदक्षिणा क्रमेण विष्वक्सेनं पूजयेत्। तद्यथा-
चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत्।
अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति॥ (ऋक्, ९/९६/१९, साम, ११७७)
वीथीशान कोणे-ॐ विष्वक्सेनाय सूत्रवती सखाय नमः विष्वक्सेनमावाहयामि-इति विष्वक्सेनमावाह्य सर्वोपचारैः सम्पूज्य प्रणमेत्॥९४॥
विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रकृणोरवध्यम्।
तस्मै विशः समनमन्त पीर्वीरय मृगो विहव्यो यथासत्॥ (यजु, १७/२४)
वीथ्यग्नि कोणे-ॐ विष्वक्सेनाय नमः विष्वक्सेनमावाहयामि-इति विष्वक्सेनमावाह्य पूर्वोक्त रीत्या सम्पूज्य प्रणमेत्॥९५॥
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्।

मुह्यन्त्वये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु॥
(ऋक्, १०/८१/६, साम, १५८९, यजु, १७/२, तैत्तिरीय संहिता, ४/६/२/६)
वीथिकाग्नि कोणे-ॐ सेनेशाय नमः सेनेशमावाहयामि-इति सेनेशमावाह्य सर्वोपचारैः सम्पूज्य प्रणमेत्॥९६॥
या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः॥
(ऋक्, १०/८१/५, यजु, १७/२१, तैत्तिरीय संहिता, ४/६/२/५)
वीथिका वायु कोणे-ॐ वैकुण्ठ सेनान्ये सूत्रवती सखाय नमः वैकुण्ठसेनान्यमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥९७॥
द्वाराद् बहिः क्षितौ पूर्वस्यां गारुडं दक्षिणस्यां चक्रं पश्चिमायां गदां उत्तरस्यां शङ्खं पूजयेत्। तद्यथा-
सुपर्णोऽस्मि गरुत्माँस्त्रिवृते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ। स्तोम आत्मा छन्दांस्यङ्गानि यजूंषि नाम। साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः। सुपर्णोऽसि गरुत्मान् दिवं गच्छः स्व पत॥ (यजु, १२/४)
द्वाराद् बहिः क्षितौ पूर्वस्याम्-ॐ गरुडाय पक्षिराजाय नमः गरुडमावाहयामि-इति गरुडमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥९८॥
लोकस्य द्वारमर्चिमत् पवित्रम्। ज्योतिष्मद् भ्राजमानं महस्वत्। अमृतस्य धारा बहुधा दोहमानम्। चरणां नो लोके सुधितां दधातु। (तैत्तिरीय ब्राह्मण, ३/१२/३/४)
द्वाराद् बहिः दक्षिणस्याम्-ॐ सुदर्शनाय हेतिराजाय नमः सुदर्शनमावाहयामि-इति सुदर्शनमावाह्य सर्वोपचारैः सम्पूज्य प्रणमेत्॥९९॥
या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे। रक्षा समस्य नो निदः॥ (ऋक्, ९/६१/३०, सामवेद, २/१३०)
द्वाराद् बहिः पश्चिमायाम्-ॐ कौमोदक्यै गदाधिपतये नमः कौमोदकी गदामावाहयामि-इति गदामावाह्य सर्वोपचारैः सम्पूज्य प्रणमेत्॥१००॥
अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयम्। उपयाम गृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चसे॥ (यजु, २६/९)
द्वाराद् बहिरुत्तरस्याम्-ॐ पाञ्चजन्याय शङ्खाधिपतये नमः पाञ्चजन्यमावाहयामि-इति शङ्खमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥१०१॥
ततोऽरुण पूर्ण शोभासु पूर्वादि क्रमेण विमला उत्कर्षिणी ज्ञाना क्रिया प्रह्वी सत्या ईशाना योगा इत्यष्टौ चामरग्राहिणीः पूजयेत्। तद्यथा-
अथैनाष्टौ विरूपानालभतेऽति दीर्घं चाति ह्रस्वं चाति स्थूलं चाति कृशं चाति शुक्लं चाति कृष्णं चाति कुल्व चाति लोमशं च। अशूद्राऽअब्राह्मणास्ते प्राजापत्याः। मागधः पुँश्चली कितवः क्लीबोऽशूद्रा अब्राह्मणास्ते प्राजापत्याः॥ (यजु, ३०/२२)
ॐ विमलायै चामरहस्तायै नमः विमलामावाहयामि-इति प्राच्यां विमलामावाह्य षोडशोपचारैः समर्चयेत्॥१०२॥
मूर्धासि राड् ध्रुवासि धरुणा धर्त्र्यसि धरणी। आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा। (यजु, १४/२१)
ॐ उत्कर्षिण्यै चामरहस्तायै नमः उत्कर्षिणीमावाहयामि-इत्याग्नेय्यामुत्कर्षिणीमावाह्य सर्वोपचारैः पूजयेत्॥१०३॥
संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात्। अग्नेर्भस्मास्यग्नेः पुरीषमसि चितस्थ परिचित ऊर्ध्वचितः श्रयध्वम्। (यजु, १२/४६)
ॐ ज्ञानायै चामरहस्तायै नमः ज्ञानामावाहयामि-इति दक्षिणस्यां ज्ञानमावाह्य पूर्वोक्त रीत्या पूजयेत्॥१०४॥
माता च ते पिता चते ऽग्रे वृक्षस्य क्रीडतः। विचक्षत इव ते मुखं ब्रह्मन् मा त्वं वदो बहु। (यजु, २३/२५)
ॐ क्रियायै चामरहस्तायै नमः क्रियामावाहयामि-इति नैर्ऋत्यां क्रियामावाह्य सर्वोपचारैः समर्चयेत्॥१०५॥
बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य। इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः॥ (यजु,

२९/४२)
ॐ प्रह्व्यै चामरहस्तायै नमः प्रह्वीमावाहयामि-इति पश्चिमायां प्रह्वीमावाह्य षोडशोपचारैः पूजयेत्॥१०६॥
दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः। अश्रद्धामनृतेऽदधाच्छ्रद्धां सत्ये प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु। (यजु, १९/७७)
ॐ सत्यायै चामरहस्तायै नमः सत्यामावाहयामि-इति वायव्यां सत्यामावाह्य सर्वोपचारैः समर्चयेत्॥१०७॥
तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यता वेदसामसद्वृधे रक्षिता पायुरब्धः स्वस्तये॥ (यजु, २५/१८)
ॐ ईशानायै चामरहस्तायै नमः ईशानामावाहयामि-इत्युत्तरस्यामीशानामावाह्य पूर्वोक्त रीत्या पूजयेत्॥१०८॥
योगे योगे तवस्तरं वाजे वाजे हवामहे। सखाय इन्द्रमूतये॥ (यजु, ११/१४)
ॐ योगायै चामरहस्तायै नमः योगामावाहयामि-इतीशान्यां योगामावाह्य पूर्वोक्त रीत्या पूजयेत्॥१०९॥
ततः पीतोपशोभासु पूर्वादि क्रमेणाष्ट वसून् पूजयेत्। तद्यथा-
अप्स्वने सधिष्ठव सौषधीरनु रुध्यसे। गर्भेसञ्जायसे पुनः॥ (यजु, १२/३६)
पूर्वे-ॐ अद्भ्यो नमः अपः आवाहयामि-इत्यप आवाह्य षोडशोपचारैः पूजयेत्॥११०॥
ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात्। घृतेन द्यावापृथिवी पूर्येथामिन्द्रस्य छदिरसि विश्वजनस्य छाया॥ (यजु, ५/२८)
अग्नि कोणे-ॐ ध्रुवाय नमः ध्रुवमावाहयामि-इति ध्रुवमावाह्य सर्वोपचारैः पूजयेत्॥१११॥
इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा॥ (यजु, ९/४०)
दक्षिणे-ॐ सोमाय नमः सोममावाहयामि-इति सोममावाह्य पूर्वोक्त रीत्या समर्चयेत्॥११२॥
भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री।
पृथिवीं यच्छ पृथिवीं दृंह पृथिवीं मा हिंसीः॥ (यजु, १३/१८)
निर्ऋति कोणे-ॐ धरण्यै नमः धरणीमावाहयामि-इति धरणीमावाह्य सर्वोपचारैः पूजयेत्॥११३॥
मरुतो यस्य हि क्षये पाथा दिवो विमहसः। स सुगोपातमो जनः॥ (यजु, ८/३१)
पश्चिमे-ॐ अनिलाय नमः अनिलमावाहयामि-इत्यनिलमावाह्य सम्यगर्चयेत्॥११४॥
अग्निदूतं पुरो दधे हव्यवाहमुपब्रुवे। देवान् आसादयादिह॥ (यजु, २२/१७)
ॐ प्रत्यूषाय नमः प्रत्यूषमावाहयामि-इत्युत्तरे प्रत्यूषमावाह्य सर्वोपचारैः समर्चयेत्॥११६॥
वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वा सञ्जानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावताम्। व्यन्तु वयोक्तं रिहाणा मरुतां पृषतीर्गच्छ पृश्निर्भूत्वा दिवं गच्छ ततोनोवृष्टिमावह। चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि॥ (यजु, २/१६)
ईशान कोणे-ॐ प्रभाताय नमः प्रभातमावाहयामि-इति प्रभातमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥११७॥
ततः कृष्णार्ध शोभासु पूर्वादि क्रमेण अष्टकुल नागान् पूजयेत्। तद्यथा-
तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे। अनन्त मन्यद्रुशदस्य पाजः कृष्टणमन्यद्धरितः सं भरन्ति॥ (यजु, ३३/३८)
पूर्वे-ॐ अनन्ताय नमः अनन्तमावाहयामि -इत्यनन्तमावाह्य सर्वोपचारैः सम्पूज्य प्रणमेत्॥११८॥
नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥ (यजु, १३/६)
आग्नेय कोणे-ॐ वासुकये नमः वासुकिमावाहयामि-इति वासुकिमावाह्य पूर्वोक्त रीत्या समर्चयेत्॥११९॥
नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कमरिभ्यश्च वो नमो। नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः

श्वनिभ्यो मृगयुभ्यश्च वो नमः। (यजु, १६/२७)
दक्षिणे-तक्षकाय नमः तक्षकमावाहयामि-इति तक्षकमावाह्य सर्वोपचारैः समर्चयेत्॥१२०॥
पुरुष मृगश्चन्द्रमसो गोधा कालका दार्वा घाटस्ते वनस्पतीनां कृकवाकुः सावित्रो हंसो वातस्य नाक्रो मकरः कुलीपयस्तेऽकूपारस्य ह्रियै शल्यकः॥ (यजु, २४/३५)
नैर्ऋति कोणे-ॐ कुलीराय नमः कुलीरमावाहयामि-इति कुलीरमावाह्य पूजोपचारैः समर्चयेत्॥१२१॥
इन्द्रस्य रूपमृषभो बलाय कर्णाभ्यां श्रोत्रममृतं ग्रहाभ्याम्। यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघम्मुखात्॥ (यजु,१९/९१)
पश्चिमे-ॐ कर्कोटाय नमः कर्कोटमावाहयामि-इति कर्कोटमावाह्य षोडशोपचारैः समर्चयेत्॥१२२॥
प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकं शब्दायाडम्बराघातं महसे वीणावादं क्रोशाय तृनवध्ममवरस्पराय शङ्खध्मं वनपमन्यतोरण्याय दावपम्॥ (यजु, ३०/१९)
वायु कोणे-ॐ शङ्खपालाय नमः शङ्खपालमावाहयामि-इति शङ्खपालमावाह्य पूर्वोक्त रीत्या समर्चयेत्॥१२३॥
प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा। अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन। ससत्यश्वकः सुभद्रिकां काम्पील वासिनीम्॥ (यजु, २३/१८)
उत्तरे-ॐ कम्बलाय नमः कम्बलमावाहयामि-इति कम्बलमावाह्य सर्वोपचारैः सम्पूजयेत्॥१२४॥
यूपव्रस्का उत ते यूपवाहाश्चषालं ये अश्वयूपाय तक्षति।
य चार्वते पचनं सम्भरन्त्युतो तेषामभिगूर्त्तिर्न इन्वतु॥ (यजु, २५/२९)
ईशान कोणे-ॐ अश्वतराय नमः अश्वतरमावाहयामि-इत्यश्वतरमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥१२५॥
आग्नेय प्रभृतिषु चतुष्कोणेषु चतुर्व्यूहान् पूजयेत्। तद्यथा-
भायै दार्वाहारं प्रभाया अग्न्येधं ब्रघ्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टितारं देवलोकाय पेशितारं मनुष्य लोकाय प्रकारितारं सर्वेभ्यो लोकेभ्य उपसेक्तारमव ऋत्यै वधायोपमन्थितारं मेघाय वासः पल्पूलीं प्रकामाय रजयित्रीम्॥ (यजु, ३०/१२)
ॐ वासुदेवाय परमेष्ठ्यात्मने नमः वासुदेवमावाहयामि-इत्याग्नेयां वासुदेवमावाह्य सर्वोपचारैः सम्पूज्य प्रणमेत्॥१२६॥
कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि। समापो अद्भिरग्मत समोषधीभिरोषधीः॥ (यजु, ६/२८)
ॐ सङ्कर्षणाय पुरुषात्मने नमः सङ्कर्षणमावाहयामि-इति नैर्ऋत्यां सङ्कर्षणमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥१२७॥
मित्रस्य चर्षणी धृतोऽवो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमम्॥ (यजु, ११/६२)
ॐ प्रद्युम्नाय विश्वात्मने नमः प्रद्युम्नमावाहयामि-इति वायव्यां प्रद्युम्नमावाह्य सर्वोपचारैः सम्पूज्य प्रणमेत्॥१२८॥
ऋतं सत्यमृतं सत्यमग्निं पुरीष्यमङ्गिरस्वद् भरामः। ओषधयं प्रतिमोदध्वमग्निमेतं शिवमायन्तमभ्यत्र युष्माः। व्यस्यन् विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जहि॥ (यजु, ११/४७)
ॐ अनिरुद्धाय निवृत्त्यात्मने नमः अनिरुद्धमावाहयामि-इतीशान्याम् अनिरुद्धमावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥१२९॥
बाह्य परिधिषु सत्त्वादि गुण त्रय सम्भूतान पूजयेत्। तद्यथा-
त्रिर्देवः पृथिवीमेष एतां वि चक्रमे शतर्चसं् महित्वा। प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नाम॥
(ऋक्, ७/१००/३, तैत्तिरीय ब्राह्मण, २/४/३/५)
बाह्य शुक्ल परिधौ-ॐ सत्त्वगुणसम्भूतेभ्यो नमः सत्त्वगुणसम्भूतान्यावाहयामि-इति सत्त्वगुणसम्भूतान्यावाह्य षोडशोपचारैः सम्पूज्य प्रणमेत्॥१३०॥

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमाँ कस्मै देवाय हविषा विधेम॥
(ऋक्, १०/१२१/१, अथर्व, ४/२/७, यजु, १३/४, २३/१, २५/१०, तैत्तिरीय संहिता, ४/१/८/३)
बाह्यारुण परिधौ-ॐ रजोगुणसम्भूतेभ्यो नमः रजोगुणसम्भूतान्यावाहयामि-इति रजोगुणसम्भूतान्यावाह्य सर्वोपचारैः समर्चयेत्॥१३१॥
असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्। तेषां सहस्र योजनेऽव धन्वनि तन्मसि॥ (यजु, १६/५४)
बाह्य कृष्ण परिधौ-ॐ तमोगुण सम्भूतेभ्यो नमः तमोगुण सम्भूतमावाहयामि-इति तमोगुण सम्भूतमावाह्य षोडशोपचारैः सम्पूजयेत्॥१३२॥
एवं चक्राब्ज मण्डले देवानावाह्य संस्थाप्य सम्पूजयेत्।
नमोऽस्मदाचार्य परम्पराभ्यो नमो नमो भागवतब्रजेभ्यः।
नमो नमोऽनन्तमुखामरेभ्यो नमः, श्रियै श्रीपतये नमोऽस्तु।
इति श्रीमद्वेदमार्ग प्रतिष्ठापनाचार्य वेदान्त-प्रवर्तकाचार्य श्रीमत् परमहंस परिव्राजकाचार्य सत्सम्प्रदायाचार्य जगद्गुरु भगवदनन्त-पादीय श्रीमद्विष्वक्सेनाचार्य्य स्वामिना (त्रिदण्डी स्वामीति ख्यातः) सङ्कलितः चक्राब्ज मण्डल देवता पूजा विधिः।